॥श्रीकाशीविश्वनाथपुरीमेढुंढिराजगणेशकेपास दाऊअग्निहोत्रीकेसि
द्धविनायकयन्त्रमे विश्वकर्माप्रकाशछपा दाऊपोथीवालेकेदु॰मिलेगा॥

वि॰
प्र॰
१

श्रीगणेशायनमः जयतिवरदमूर्त्तिर्मङ्गलम्मङ्गलानांजयतिसकलवन्द्याभारतीब्रह्मरूपा जयतिभुवनमातृचिन्मयीमोक्षरूपादि
शतुममम देशोवाङ्मयःशब्दरूपम् १ आब्रह्मभुवनालोकागृहस्थाश्रममाश्रिताः यतस्तस्माद्गृहारम्भप्रवेशसमयंब्रुवे हम् २
प्रवक्ष्यामिमुनिश्रेष्ठशृणुष्वेकाग्रमानसः यदुक्तंशंभुनापूर्वम्वास्तुशास्त्रंपुरातनम् ३ पराशरः प्राहबृहद्रथायबृहद्रथःप्राहचवि
श्वकर्मणे सविश्वकर्माजगतांहिताय प्रोवाचशास्त्रंबहुभेदयुक्तं ४ विश्वकर्मोवाच वास्तुशास्त्रंप्रवक्ष्यामिलोकानांहितकाम्य
या ५ पुरात्रेतायुगेह्यासीन्महाभूतम्व्यवस्थितम् स्वाप्यमानंशरीरेणसकलम्भुवनन्ततः ६ तन्दृष्ट्वाविस्मयन्देवागताःसेन्द्राभया
र्त्ताः ततस्तैभयमापन्नाब्रह्माणंशरणंययुः ७ भूतभावनभूतेशमहद्भयमुपस्थितम् क्वयास्यामःक्वगच्छामोवयंलोकपितामह
हः ८ माभयङ्कुरुध्वोदेवाविगृह्यैतमहावलम् पातयाधोमुखंभूमौनिर्विशङ्काभविष्यथ ९ ततस्तैःक्रोधसन्तप्तैर्गृहीत्वातम्महा
वलम् विनिक्षिप्तमधोवक्त्रंस्थितास्तत्रैवतेसुराः १० तमेववास्तुपुरुषंब्रह्मासमसृजत्प्रभुः कृष्णपक्षेतृतीयायांमासिभाद्रपदेत
था शनिवारेभवज्जन्मनक्षत्रेकृत्तिकासुच योगस्तस्यव्यतीपातःकरणंविष्टिसंज्ञकं १२ भद्रान्तरेभवज्जन्मकुलिकेनुतथैवच
क्रोशमानम्महाशब्दंब्रह्माणंसमुपद्यत १३ चराचरमिदंसर्वन्त्वयासृष्टंजगत्प्रभो विनापराधेनचमांपीडयन्तिसुराःभृशम् १४ व
रन्तस्मैददौप्रीतोब्रह्मालोकपितामहः ग्रामेवानगरेवापिदुर्गेवापत्तनेपिवा १५ प्रासादेचप्रपायांचजलोद्यानेतथैवच यस्त्वान्न
पूजयेन्मर्त्योमोहाद्वास्तूनरप्रभो १६ अश्रियम्मृत्युमाप्नोतिविघ्नन्तस्यपदेपदे वास्तुपूजामकुर्वाणस्तवाहारोभविष्यति १७ इत्यु

3470

क्रान्तदेशेसद्योदेवोब्रह्मविदांवरः वास्तुपूजांप्रकुर्वीतगृहारंभेप्रवेशने १८ द्वाराभिवर्धनेचैवत्रिविधेचप्रवेशने प्रतिवर्षंत्वयज्ञादौतथा
पुत्रस्य जन्मनि १९ व्रतबन्धेविवाहेचतथैवचमहोत्सवे जीर्णोद्धारेतथाशल्यवासेचैवविशेषतः २० वज्राग्निदूषितेभग्नेसर्पचा
ण्डालवेष्टिते उलूकवासितेसप्तरात्रौकाकाधिवासिते २१ मृगाधिवासितेरात्रौगोमार्जाराभिनादिते वारणाश्वादिविकृते स्त्रीणांयु
द्धाभिदूषिते २२ कपोतकगृहावासेमधूनांनिलये तथा अन्यैश्चैवमहोत्पातैर्दूषितेशान्तिमाचरेत् २३॥ अथभूमिदर्शनम् ॥
अथातः संप्रवक्ष्यामिलोकानांहितकाम्यया श्वेतारक्तातथापीताकृष्णावर्णानुपूर्वतः २४ सुगन्धाब्राह्मणीभूमी रक्तगन्धानृप
त्रिणी मधुगन्धाभवेद्वैश्यामद्यगन्धाचशूद्रिणी २५ मधुराब्राह्मणीभूमीकषायाक्षत्रियामता अम्लावैश्याभवेद्भूमिस्तिक्ताशूद्र
प्रकीर्तिता २६ चतुरस्रांद्विपाकारांसिंहोक्षाश्वेभरूपिणीं वृत्तांभद्रपीठंचत्रिशूलंलिङ्गसन्निभं २७ प्रासादध्वजकुम्भादिदे
वानामपिदुर्लभां त्रिकोणांशकटाकारांसूर्पव्यजनसन्निभां २८ मुरजाकारसदृशांसर्पमण्डूकरूपिणीं खराजगरसङ्का
शांश्वकाच्छिपिटरूपिणीं २९ मुद्गराभांतथोलूककाकसर्पनिभान्तथा सूकरोष्ट्राजसदृशांधनुःपरशुरूपिणीं ३० कुकलास
शवाकारान्दुर्गम्यांश्चविवर्जयेत् मनोरमाचयाभूमिःपरीक्षेतप्रयत्नतः ३१ द्वितीयाहस्तभूमिश्चनिम्नाचोत्तरपूर्वके गम्भीराब्राह्मणी
भूमिर्नृपाणांतुङ्गमाश्रिता ३२ वैश्यानांसमभूमिश्चशूद्राणांविकटास्मृता सर्वेषाञ्चैववर्णानांसमभूमिःशुभावहा ३३ शुक्लव
र्णाचसर्वेषांशुभाभूमिरुदाहृता कुशकाशयुताब्राह्मीदूर्वान्नृपतिवर्गगा ३४ फलपुष्पलतावैश्याशूद्राणांतृणसंयुता नदीघाता

वि०
प्र०
२

श्रितांतद्वन्महापाषाणसंयुतां ३५ पर्वताग्रेषुसंलग्नाङ्गर्तांश्विवरसंयुतां वक्रांसूर्प्पनिभांतद्वत्कुटाभाङ्कुरूपिणीम् ३६ मुषल
भाम्महाघोरांवायुनावापिपीडितां वल्लभल्लकसंयुक्तांमध्येविकटरूपिणीम् ३७ श्वसृगालनिभां रूक्षांदन्तकैःपरिवा
रितां चैत्यश्मशानवल्मीकधूर्तकालयवर्जिताम् ३८ चतुष्पथमहावृक्षदेवमंत्रिनिवासतां दूराश्रिताञ्चभूगर्तसुक्तांश्चैवविवर्ज
येत् ३९ इतिभूमिलक्षणं॥ अथफलानि॥ सुवर्णगन्धासुरसाधनधान्यसुखावहा व्यत्ययेव्यत्ययफलाश्वतत्कार्यम्परीक्षण
म् ४० चतुरस्रामहाधन्याद्विपाभाधनदायिनी सिंहाभासगुणान्पुत्रान्वृषाभापशुवृद्धिदा ४१ वृत्तासद्विनदाभूमिर्भद्रपीठनिभा
तथा त्रिशूलरूपावीराणांसुतनिर्धनसौख्यदा ४२ लिङ्गाभालिङ्गिनांश्रेष्ठाप्रासादध्वजसन्निभा पदोन्नतिंमकुरुतेकुम्भाभा
धनवर्द्धिनी ४३ त्रिकोणशकटाकारासूर्प्यव्यजनसन्निभा क्रमेणसुतसौख्यार्थधर्महानिकरीस्मृता ४४ मुरजावंशहासर्पम
ण्डूकाभाभयावहा नैस्वंखरानुकारएवमृत्युदाजगराग्निना ४५ चिपिटापौरुषैर्हीनासुद्गराभातथैवच काकोलूकनिभासदादु
खशोकभयप्रदा ४६ सर्पाभापुत्रपौत्रघ्नीवंशाभावंशहानिदा सूकरोष्ट्राजसदृशीधनुःपरशुरूपिणी ४७ कुचैलान्मलिनान्मू
र्खान्ब्रह्मघ्नाञ्जनयेत्सुतान् कृकलासशवाकारामृतपुत्रायनार्तिदा ४८ दुर्गम्यापापिनाम्वंशप्रजाभूमिंपरित्यजेत् मनोरमासु
नप्रदाहृढाधनप्रदामता सुतार्थदानयाप्युदक्सुरेशदिक्सवामही ४९ गंभीरशब्दाजनयेत्सुतान्गंभीरनिस्वनान् तुङ्गाप्रदा
न्वितान्कुर्य्यात्समासौभाग्यदायिनी ५० विकटाशूद्रजातीनानथादुर्गनिवासिनाम् शुभदानापरेषांचातस्करणांशुभावहा ५१

रामः

स्ववर्णवर्णास्तान्वर्णान्वर्णानामाधिपत्यदा शुक्लवर्णा च सर्वेषां पुत्रपौत्रविवर्द्धिनी कृष्णकाशान्विनाशं सर्वं सान्कुरुते सुतान् दूर्वानि
नावीरजनिः फलाढ्या धनपुत्रदा ५३ नदीघातात्रिनामूर्खान्मृतवत्सांस्तथैव च दरिद्रान्पश्चमध्यस्था गर्तोवस्था मृषायुतान् ५४ बि
बरापस्तु पुत्रान्निंदायिनी सौख्यहारिणी वक्रानि वक्राज्जनयेत्पुत्रान्विद्याविहीनकान् ५५ शूर्पमार्जारलकुटनिभाभीतिसुतार्निंदा शु
शलाशुशला सुतान्जनयेद्दंपाघातकान् ५६ घोराघोरप्रदा वायुपीडिता वायुभीतिदा वल्लभल्लकसंयुक्ता पशुहा निम्नदा सदा ५७
विकटा विकटान्पुत्रान्वं शृगालनिभा तथा ददाति रूक्षा परुषाद्दुर्वचान्जनयेत्सुतान् ५८ गृहस्वामिभयं चैत्यवल्मीके विपदः स्मृता
धूर्त्तालयसमीपे तु पुत्रस्य मरणं ध्रुवम् ५९ चतुष्पथे त्वकीर्तिः स्यादुद्वेगो देवसद्मनि स्वर्थहा निश्वसचिवेश्मभे विपद्वृत्कटाः ६०
गर्त्तायां तु पिपासा स्यात्कूर्मभे धननाशनम्॥ अथ भूमिपरीक्षा॥ निखने हस्तमात्रेण पुनस्तेनैव पूरयेत् पांशुनाधिकमध्योना
श्रेष्ठा मध्याधमा क्रमात् ६१ जलेनापूरयेच्छ्वभ्रं शीघ्रं गत्वा पदैः शतं तथैवागम्य वीक्षेत न हीनं सलिलं शुभा अरत्निमात्रं श्वभ्रे वा ह
त्तु लिप्तेव सर्वतः ६२ घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयं ज्वालयेद्भूपरीक्षार्थं संपूर्णं सर्वदिङ्मुखं ६३ दीप्ता पूर्वादि गृह्णीयाद्वर्णानां
मनुपूर्वशः हलाकृष्टेन यो देशे सर्ववीजानि वापयेत् ६४ त्रिपञ्चसप्तरात्रेण न प्रोहन्ति तान्यपि उत्तमा त्रिरात्रेण साङ्कुरा शोभना मही
मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता तिलान्वा वापयेत्तत्र यवांश्चापि च सर्षपान् ६६ अथवा सर्वधान्यानि वापयेच्च समन्ततः यत्रैव
प्ररोहन्ति तां प्रयत्नेन वर्जयेत् ६७ व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः यवाश्चौषधयः सप्त सर्ववीजानि चैव हि ६८ सुवर्णनाम्नु

षाणिस्वभ्रमध्यगतानिच यस्यनाम्निसमायान्तिसाभूमिस्तस्यशोभना ६९ पांशवोरेणुनांनीत्वानिरीक्षेदन्तरिक्षगाः अधोमध्योर्द्धग
न्धणांगतितुल्यफलप्रदाः ७० हस्तांप्रकृष्टवीजाङ्गोप्युषितांब्राह्मणेस्तथा गत्वामहीङ्कृहपतिस्त्रालेसाप्यन्तरोदिते ७१॥ अथशाकुना:
॥ उत्पाहपांस्वाध्ययनाम्बुकुम्भाविप्राश्ववीणापटहस्वनानि पुत्रान्वितास्त्रीगुरवोमृदङ्गावाद्यानिभेरीनिनदाःप्रशस्ताः ७२ कन्या
सुधौतांम्बरवासकारिमृदःसुरस्यासुरभीसुगन्धा पुष्पाणिचामीकररौप्यमुक्ताप्रवालभक्ष्याणिशुभावहानि ७३ भृंगारांजनवद्धैकप
शुप्योष्णीषचन्दनम् आदर्शव्यजनंवर्द्धमानाश्चापिशुभावहाः ७४ आमिषंदधिदुग्धंचनृयानंछत्रमेवच मीनानिमिथुनंपुंसामायु
रारोग्यवृद्धिदम् ७५ कमलममलङ्गीतारवःसितोक्षमृगाद्विजाः गमनसमयेपुंसांधन्यागृहाद्यधिवासिते गजहयसवात्सिन्यस्त
धूमवराङ्गनाधनसुतसुखारोग्यायुःप्रदागृहकर्मणि ७६ गणिकाचाङ्कुशंदीपमालांबालांसुभूषितां तथावृष्टिर्गृहारंभेनिवेशेसम
भीष्टदा ७७॥ अथापशकुनानि॥ दुर्वाणीशत्रुवाणीचमद्यञ्चर्मास्थिरेवच तृणन्तुषन्तथासर्पचर्मचाङ्गारमेवच ७८ कार्पासलव
णम्पङ्कक्लीवंतैलौषधानिच पुरीषङ्कृष्णधान्यानिव्याधितामपक्वमेवच ७९ पतितोजटिलोन्मत्तौमुण्डोनग्नशिरस्तथा इन्धनानि
विरावश्वद्विपक्षिमृगमातुषम् ८० ज्वलिताशासुदग्धासुधूमितासुचपश्यतः मरणंनिर्दिशेन्मासत्रयशल्यंविनिर्दिशेत् ८१ य
स्यापशकुन तस्यशल्यन्तत्रभवेद्गृहे तत्रवासन्नकुर्वीतगृहञ्चैवनकारयेत् ८२॥ अथखननविधिः॥ ज्योतिश्शास्त्रानुसारे एमः
प्रसुदिनेशुभवासरे सुलग्नेसुमुहूर्तेचसुस्नातःप्राङ्मुखोगृही ८३ पूजयेद्गणनाथञ्चग्रहांश्चकलशेस्थितान् परीक्षितायांभूभागेसो

मयेनानुलिप्यच ८४ तत्रसंपूजयेद्विप्रान्देवज्ञांश्चतथैवच यावत्प्रमाणाभूस्तात्तावत्प्रमाणंखनेद्गृही ८५ पञ्चगव्यैश्चपथिजलैस्तथा
पिश्वामृतेनच सेचयेत्सुद्धिकामेनभूसंस्कारांश्चकारयेत् ८६ तत्रकुम्भंनिवेश्याद्दौहेमगर्भफलैर्युतम् सर्वधान्ययुतंसर्वगन्धैस्स
र्वौषधैर्युतम् ८७ पुष्पान्वितंरक्तवर्णंसवस्त्रंमंत्रमंत्रितम् तस्मिन्नावाहयेत्सेद्रान्वरुणप्रमुखांस्तथा ८८ तस्मिन्नावाहयेद्भूमिंश्च
सैलवनकाननं नदीनदसमायुक्तांदुर्गिकाभिश्चभूषितां ८९ सागरैर्वेष्टितांतत्रपूजयेत्मार्थयेत्ततः दिक्पालान्कुलदेवीश्चदेवा
न्यक्षांस्तथोरगान् ९० वलिञ्चदत्वाविधिवत्मलायेतिजपेत्ततः षट्सहस्रं जापञ्चकारयेद्विधिपूर्वकम् ९१ तस्मिन्संपूजयेद्वास्तु
मार्थयेत्पूजयेत्ततः ॐनमोभगवतेवास्तुपुरुषायकपिलायच ९२ पृथ्वीधरायदेवायप्रधानपुरुषायच सकलगृहप्रासादपुष्करो
द्यानकर्मणि ९३ गृहारंभप्रथमकालेसर्वसिद्धिप्रदायक सिद्धदेवमनुष्यैश्चपूज्यमानोदिवानिशं ९४ गृहस्थानेप्रजापतिक्षेत्रेस्मि
न्निष्ठसाम्प्रतं इहागच्छइमांपूजांगृहाणवरदोभव ९५ वास्तुपुरुषनमस्तेस्तुभूमिशय्यारतप्रभो मद्गृहन्धनधान्यादिसमृद्धिंकुरु
सर्वदा ९६ इतिप्रार्थ्यततोभूमौसंलिखेद्वास्तुपूरुषम् पिष्टातकैस्तंडुलैर्वानागरूपधरंविभुं ९७ आवाहयेद्वेदमन्त्रैःपूजयेच्चस्वशक्ति
तः आवाहयाम्यहंदेवंभूमिस्थंचअधोमुखं ९८ वास्तुनाथंजगत्प्राणंपूर्वस्यांप्रथमाश्रितम् विष्णोरराटेतिमंत्रेणपूजयेत्सर्वनायक
म् ९९ नमोस्तुसर्पेभ्यइतिवापूजयेच्चस्वशक्तितः कुक्षिप्रदेशेनिखनेद्वास्तुनागस्यमन्त्रतः १०० त्रिषुत्रिषुचमासेषुनभस्यादिषुचक्र
मात् यद्दिङ्मुखोवास्तुनरस्तन्मुखंसदनंशुभम् १०१ अन्यदिङ्मुखगेहन्तुदुःखशोकभयप्रदम् वृषार्कादित्रिकेवेद्यासिंहादिगणये

भैरवञ्चतथैवच नद्दिक्पालन्नमस्कृत्यपृथिवीन्तथैवच ११९ शिवोनामेतिमन्त्रेणलोहदण्डंप्रपूजयेत् निवर्तयामीत्यृचयाऽभ्या
येदीशमुमापतिम् १२० बलेनलोहदण्डेननिखनेद्वास्तुपूरुषं यावत्प्रमाणांभुवमेतितावत्तस्यस्थितिर्भवेत् १२१ तंलोहदण्डं
वस्त्राढ्यंब्राह्मणायनिवेदयेत् पुत्रायद्विषमेकुल्येसमेकुल्येतुकन्यकां १२२ निर्दिष्टेतुतयोर्मध्येलोहखण्डान्निकृन्तया तस्मि
न्कालेशुभान्वाणीमङ्गल्यंवाहदर्शनम् १२३ वेदगीतध्वनिंपुण्यफललाभन्तथैवच वेणुवीणामृदङ्गानांस्वराणांदर्शनंशुभ
म् १२४ दधिदूर्वाङ्कुशाश्चेतिकल्याणद्रव्यदर्शनम् सुवर्णरजतन्ताम्रंशंखमौक्तिकविद्रुमान् १२५ मणयोरत्नवैडूर्यस्फाटि
कंसुखदामृदः गाण्डञ्चफलंपुष्पंमृन्मयंगुल्ममेवच १२६ खाद्यानिकन्दमूलानिसाभूमिःसुखदायिनी कण्टकञ्चतथासर्पहृ
जूंदर्दुमेवच १२७ वृश्चिकाश्मकवल्मीकञ्चविवरंलोहमुद्गरम् केशाङ्गारकभस्मञ्चचर्मास्थिलवणन्तथा १२८ रुधिरञ्चतथाम
ज्जारसाक्रान्तानशोभना॥ इतिवास्तुशास्त्रेभूम्यादिपरीक्षालक्षणंप्रथमोऽध्यायः १॥ अथस्वप्नविधिः॥ गणेशंलोकपालं
श्चपृथिवींचविशेषतः ग्रहांश्चकलशेपूज्ययथामन्त्रंयथोदितम् १२९ यथाकल्पमुपस्कृत्यशुचौदेशेकुशासनः भूमौसुप्तेनव
स्त्रेणशीर्षेसंपूजयेच्छ्रियम् १३० पश्चाच्चभद्रकालीञ्चबलिन्दत्वातथैवच सर्ववीजान्विताकुंभान्सर्वरत्नौषधैर्युतान् १३१ कृत्वो
भयनतेरम्यान्नवान्शुद्धोदकान्वितान् कल्पयित्वासुमनसः कृत्वास्वस्त्ययनादिकम् १३२ सावधानःशुचिःसम्यक्सोमवासीजिते
न्द्रियः मामुखोहदृरुदेतिहृदिरुद्रंविधिंजपेत् १३३ षडक्षरंचरुद्रजापञ्चकारयेत्शयनःशुचिः १३४॥ सकारांतरं॥ दुकूलशुक्ला

वि० प्र० ५

मणि भृन्नरेन्द्रः समंत्रिदैवज्ञपुरोहितोनः स्वदेवनागारमनुप्रविश्य निवेशयेत्तत्र दिगीश्वरार्चाम् १३५ अभ्यर्च्य मन्त्रैस्तु पुरोहितस्तामन्
नस्थानस्यां भुवि संस्थितायाम् दर्भैस्त्वहंत्वानरमश्च नैलाङ्कितैस्समन्तान्निनसर्वैपैश्च १३६ चालीं सदूर्वामयनागपूषिकृत्वोपध
नं शिरसि स्थितीशः पूर्णान्घटान्पुष्पफलान्वितांस्तानाशासु कुर्यात्त्वतुरः क्रमेण १३७ पञ्चायतो दूरमुदैनि दैवमावर्त्य मन्त्रान्स्तथ
नस्तथैतान् लघ्वेकभुक् दक्षिणपार्श्वशायी स्वप्नंपरीक्षेतयथोपदेशम् १३८ नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च वामनाय वि
पायस्वप्नाधिपतयेनमः १३९ भगवन्देवदेवेश शूलभृद्वृषवाहन इष्टानिष्टे समाचक्ष्व स्वप्ने सुप्तस्य शाश्वत १४० एकवस्त्रः कुशा
स्तीर्णे सुप्तः प्रयतमानसः निशान्ते पश्यति स्वप्नं शुभं वा यदि वाशुभम् १४१ चतुरस्रां समां शुद्धां भूमिं कृत्वा प्रयत्नतः तस्मिन्दिक्
साधनं कुर्यात् मृत्तमध्यगते दिशि १४२ पूर्वप्लवे भवेल्लक्ष्मीराग्नेय्यां शोकमादिशेत् याम्यां याति यमद्वारं नैरृते च महाभयं १४३
पश्चिमे कलहं कुर्याद्वायव्यां मृत्युमादिशेत् उत्तरे वंशवृद्धिः स्यादीशाने रत्नसञ्चयः १४४ दिङ्मूढे कुलनाशः स्याद्ध्रुवं दारिद्र्यमादि
शेत्॥ अथ समयशुद्धिः॥ चैत्रे व्याधिमवाप्नोति यो नवं कारयेद्गृहम् वैशाखे धनरत्नानि ज्येष्ठे मृत्युस्तथैव च ४५ आषाढे भृत्यरत्नानि
पशुवर्गमवाप्नुयात् श्रावणे मित्रलाभं तु हानिं भाद्रपदे तथा १४६ युद्धं चैवाश्विने मासि कार्त्तिके धनधान्यकं धनवृद्धिर्मार्गशीर्षे पौषेत
स्करतो भयम् १४७ माघे त्वग्निभयं विन्द्याल्लक्ष्मीवृद्धिश्च फाल्गुने गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत् १४८ वृषस्थे धनवृद्धिः स्या रामः
न्मिथुने मरणं भवेत् कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्द्धनम् १४९ कन्यारोगं तुलासौख्यं वृश्चिके धनधान्यकं कार्मुके च महाहानिर्मक ५

रिस्याद्धनागमः १५० कुंभेतु रत्नलाभः स्यान्मीने स्वप्नभयावहम् चापमीनन्तु कन्यामासाः दोषवन्तास्मृताः १५१ ज्येष्ठे कर्मेमाघशि
हास्व्याः सौरमानेतु शोभनाः मासे तपस्येन पसि माधवे न भसि त्विषे १५२ अजैर्वगृहनिर्माणं पुत्रपौत्रधनप्रदम् निषिद्धेपि कि
लेषु स्वानुकूलेषु शुभे दिने १५३ तृणदारुगृहारंभे मासदोषो न विद्यते पाषाणेष्ट्यादिगेहानि निन्द्यमासे न कारयेत् १५४ निन्द्यमा
सेपि चन्द्रस्य मासेन शुभदं गृहम् गोचराष्टकवर्गाभ्यां साम्यवेधं विचिन्तयेत् १५५ दशान्तर्दशादीनां विचारश्चात्र कर्मणि गु
रुशुक्रबले विप्रा स्सूर्यभूमिजयोस्तथा १५६ शशिसौम्यबले सौरे वर्णानुक्रमपूर्वशः गृहारंभं प्रकुर्वीत वर्णनाथबले सति १५७
सर्वेषामपि वर्णानां सूर्यचन्द्रबलं स्मृतं विषमस्थैर्वोस्तमीपीड्यते गृहिणी विधौ १५८ शुक्रेण पीड्यते लक्ष्मीर्जीवेन सुखसंपदः
बुधेन पुत्रपौत्राश्च भौमेन भ्रातृबान्धवाः १५९ सौरेण दासवर्गाश्च पीड्यते नात्र संशयः विप्रेषेण तु सूर्यस्य बलेनोक्तं कुहस्तुथैः॥
१६० सर्वेषामपि वर्णानां रविशुद्धिर्विधीयते दशापतौ हीनबले वर्णनाथे तथैव च पीडितर्क्षगते सूर्ये न विदध्यात्कदाचन प्र
थमेकोष्टगे गच्छ द्वितीये चार्थनाशनम् १६२ तृतीये धनलाभं च चतुर्थे भयदो रविः पञ्चमे पुत्रनाशाय शत्रुनाशाय षष्ठगे १६३ स्त्री
कष्टं सप्तमे सूर्ये मृत्युश्चाष्टमगेहगे नवमे धर्मनाशाय दशमे कर्मसंयुतिः १६४ एकादशे भवेल्लक्ष्मीर्द्वादशे च धनक्षयः पुनर्द्वि
तीये द्यूने च धर्मे मध्यबलो रविः १६५ द्वितीयपुत्राद्भुगतो विश्वाहा नरतः शुभः अस्तंगतानीचराशिस्थाः पराजितोपरैर्जिताः १६६ वृ
द्धस्या बालभावस्था वक्रगाश्चातिचारगाः रिपुदृष्टिविशेषेण उल्कापातेन दूषिताः १६७ नक्षत्रनियहा गेहप्रारंभे नान्यपूजयेत् ॥

स्वामिहस्तप्रमाणेनज्येष्ठपत्नीकरेणच १६८ ज्येष्ठपुत्रकरेणापिकर्मकारकरेणच अनामिकानंहस्तःस्यादूर्द्ध्वबाहोःप्रांशकः
१६९ कनिष्ठिकामध्यमावाप्रमाणेनैवकारयेत् स्वामिहस्तप्रमाणेनज्येष्टपत्नीकरेणच १७० गर्भमात्रंभवेद्देहन्नृणांमोक्षेपु
रातनैः स्वामिहस्तप्रमाणेनगृहद्वन्द्वोदतन्द्रितः १७१ हस्तादिरेणुपर्य्यन्तमयुग्मंयुग्ममेवच कृष्णपक्षेतिथिंषष्ठिंद्वृएडान्ते
रविसङ्क्रमे १७२ रविभौमदिनेविष्ट्याम्व्यतीपातेचवैधृतौ मासदग्धंवारदग्धंतिथिंषष्ठीम्विवर्जयेत् १७३ अनुक्तेष्वेवधिष्ण्ये
षुनकर्तव्यङ्कदाचन ऋकचंतिथिदग्धञ्चयोगान्यज्ञसंज्ञकम् १७४ उत्पातैर्दूषितंऋक्षन्निसर्गन्दग्धसंज्ञकम् वज्रव्याघा
तशूलेषुव्यतीपातेतिगण्डयोः १७५ विष्कुंभकुण्डपरिघंवर्जयोगेषुकारयेत् स्वातीमैत्रेयमाहेन्द्रेगान्धर्वेभमरौहिणे १७६ ल
ग्नोक्ताद्यादिकर्तव्यमन्यत्रपरिवर्जयेत् विस्तारेणहतंदैर्घ्यम्विभजेदष्टभिस्ततः १७७ यच्छेषंसभवेदायोध्वजाद्यास्तेसुरद्विषा
ध्वजोधूम्रोहरिःश्वागौःखरेभौवायसोष्टमः १७८ पूर्वादिदिक्षुचाष्टानांध्वजादीनामवस्थितिः स्वस्थानात्पञ्चमेस्थानेवैर
त्वञ्चमहद्भवेत् १७९ विषमायाःशुभःप्रोक्तःसमायःशोकदुःखदः स्वस्थानगाःवलिष्टास्युर्नैवान्यस्थानगाःशुभाः १८० ध्वजः
सिंहेतौचगजेह्यैतेगविशुभप्रदाः वृषोनपूजितोत्यत्रध्वजःसर्वत्रपूजितः १८१ वृषसिंहगजाश्चैवखुटकर्पटकोटयो द्विपःकुम्भःप
योतव्योवापीकूपसरःसुच १८२ मृगेन्द्रमासनेदद्याच्छयनेषुगजंपुनः वृषम्भोजनपात्रेषुछत्रादिषुपुनर्ध्वजं १८३ अग्निवेश्मसु
सर्वेषुगृहेवत्सुपजीविनां धूमंनियोजयेत्केचित्स्वानंम्लेच्छादिजातिषु १८४ खरोवैश्यगृहेशस्तोध्वांक्षःशेषकुटीषुच वृषसिंहध्व

जाश्चापिशालदपुरवेशमसु १८५ गजायेवाध्वजायेवा गजानांसदनंशुभम् अश्वालयंध्वजायेचखरायेवृषभेपिवा १८६ उष्ट्राणांम
न्दिरंकुर्याद्गजायेवावृषध्वजे पशुसद्मवृषायेचध्वजायेवाशुभप्रदम् १८७ शय्याशुवृषभःशस्तःपीठंसिंहंशुभप्रदः अमंत्रछत्र
वस्त्राणांवृषायेवाध्वजेपिवा १८८ पादुकोपानहौकार्यौसिंहाये पथ्यवाध्वजे स्वर्णरूप्यादिधातूनामन्येषांतुध्वजःस्मृतः १८९
ब्राह्मणेषुध्वजःशस्तःक्षत्रीव्याक्कुरमेन्मुखं सिंहस्त्वभूभृतांशस्तउदीच्यांत्वमुखंशुभं १९० विशाम्वृषःप्राग्वदनंशूद्राणांदक्षि
णेगजः सर्वेषामेवचायानांध्वजःश्रेष्ठतमोमतः १९१ ध्वजायःक्षत्रियविशोःप्रशस्तःगुरुरब्रवीत् सिंहायःसर्वथात्याज्योब्राह्म
णोनरवृषेप्रभुना १९२ सिंहायेचगृहेनागेगेहेअल्पापत्यःप्रजायते ध्वजायेपूर्णसिद्धिःस्याद्वृषायःपशुवृद्धिदः १९३ गजायेसंपदांवृ
द्धिःशेषायाःशोकदुःखदाः पिण्डेनवाङ्काङ्कगजवह्निनागाष्टसागरैः १९४ नागैश्चगुणितेभक्तेक्रमादेनेपदार्थकाः नागाद्दिनव
सूर्योष्टभनियमुक्षस्वभानुभिः १९५ आयोवारोंशकोद्रव्यमृणामृक्षंतिथिर्युतिः आयुश्चाथगृहेशर्क्षगृहभैक्यंमृतिप्रदम् १९६
संपूर्णाःशुभदास्तेनेह्यसंपूर्णास्त्वनिष्टदाः धिष्ण्योचविकुभिर्भक्ते व्ययःस्यात्केषकाङ्कके १९७ धनाधिकद्रुहम्पद्यौनिर्द्धनायक्र
णाधिकम् व्यायान्वितक्षेत्रफलेध्रुवायस्सरसंयुते १९८ त्रिभिःशेषेक्रमादिन्द्रयमभूम्यधिपांशकाः इन्द्रांशेपदवीरद्धिर्महत्सौख्यं
प्रजायते १९९ यमांशेमरणंनूनंरोगशोकमनेकधा भूजांशेधनधान्याप्तिःपुत्रवृद्धिश्चजायते २०० राशिकूटादिकंसर्वंदम्पत्योरि
वचिन्तयेत् नैःस्वंद्विद्वादशेनूनंत्रिकोणेह्यनपत्यता २०१ षडष्टकेनैधनंस्याद्व्ययेनधनंस्मृतं धूनस्थिनेपुत्रलाभंस्त्रीलाभश्च

नथैवच २०२ जन्मतृतीयेचतथाधनधान्यागमोभवेत् दशमेकादशेचन्द्रोधनायुर्वृद्धिपुत्रदः २०३ चतुर्थाष्टमरिष्फस्थोमृत्युपुत्रविना
शदः त्रिकोणेत्वनपत्यंस्यात्केचिद्बन्धुगृहेशुभं २०४ वर्द्धनिचन्द्रसुनयोनैतन्ममनेस्मृतं अश्विन्यादित्रयम्मेषेसिंहेप्रोक्तम्मय
त्रयम् २०५ मूलादित्रितयञ्चापेशेषराशिद्विकेद्विके स्वर्यांशवाररायंशाःसदावह्निभयप्रदाः २०६ शेषयच्छाणाम्वारांशाःकर्तुरि
ष्टार्थसिद्धिदाः गृहस्यागतभंयत्तुनद्विराश्यात्मकंयदि २०७ तन्नवांशवशात्तत्रज्ञातव्यंसर्वदागृहं विपत्प्रदाविपत्तारामंत्यरीप्रति
कूलदा २०८ निधनाख्यातुयातारासर्वयानिधनप्रदा विवर्ज्येनारकास्वनान्निर्माणमशुभप्रदम् २०९ प्रत्यरिस्तुयमपदात्रिविंश
द्भिस्तुमृत्युदा निधनाख्यातुयातारास्त्रीसुतार्तिप्रदायिनी २१० कुर्वन्तज्ञानतोमोहाद्दुःखमाव्याधिभाग्भवेत् तिथौरिक्तेदरिद्र
त्वंदर्शेगर्भनिपातनं २११ कुयोगेधनधान्यादिनाशःपातस्वमृत्युदः वैधृतौसर्वनाशायनक्षत्रैक्यतथैवच २१२ आयुर्विहीने
गेहेतुदुर्भगत्वम्प्रजायते नाडीवेधोनसुभदस्तारोगभयप्रदा २१३ गणवैरेपुत्रहानिर्धनहानिस्तथैवच योनौकलिर्महादुः
खंयमांशेमरणद्वयम् २१४ नक्षत्रैक्येस्वामिमृत्युर्वैरोवंशविनाशनम् पापवारेस्वरिद्धत्वंशिशूनाम्मरणन्तथा २१५ केचित्कुनिं
मग्नेप्यन्तिचौरभीतिस्तुजायते स्वामिहस्तप्रमाणेनगृहकुर्याद्द्वानने रत्न्यादिहस्तपर्य्यन्तमोजसंख्याप्रशस्यते करमानादधि
कञ्चेत्तदाङ्गुलानिप्रदापहित्वाचक्षेत्रफलकुर्यात्तेनप्रसाधयेदिष्टसिद्ध्यर्थम् २१७ करमानादधिकञ्चेदङ्गुलानिप्रसाधयेत्
दीर्घेदेयानिवानूनञ्चविस्तीर्णेकदाचन २१८ अङ्गुलैर्घ्नात्पिता नाभिर्वर्गीकृत्यपदंभवेत् मात्रहस्तादिमानंस्यात्कुर्यादापतनंन

न २१९ एकादशकरादूर्द्ध्वं यावद्द्वात्रिंशहस्तकं तावदायादिकं चिंत्यं तदूर्ध्वं नैव चिन्तयेत् २२० आयव्ययौ मासशुद्धिं न जीर्णे चिन्तये
द्गृहे शिलान्यासमथ कुर्वीत मध्ये नस्य विधानतः २२१ ईशान्यां देवतागेहं पूर्वस्यां स्नानमन्दिरम् आग्नेय्यां पाकसदनं भाण्डागारमु
त्तरे २२२ आग्नेयपूर्वयोर्मध्ये दधिमन्थनमन्दिरं अग्निप्रेतेशयोर्मध्ये आज्यगेहं प्रशस्यते २२३ याम्यनैरृत्ययोर्मध्ये पुरीष
त्यागमन्दिरम् नैरृत्याम्बुपयोर्मध्ये विद्याभ्यासस्य मन्दिरम् २२४ पश्चिमानिलयोर्मध्ये रोदनार्थं गृहं स्मृतम् वायव्योत्तरयोर्मध्ये
रतिगेहं प्रशस्यते २२५ उत्तरेशानयोर्मध्ये औषधार्थं तु कारयेत् नैरृत्यां सूतिकागेहं नृपाणां भूमिमिच्छतां २२७ आसन्नप्रसवे
मासि कुर्याच्चैव विशेषतः तदभावे सर्वकाले स्यादिति शास्त्रेषु निश्चयः २२८ मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने प्रसूतिसंभवे काले गृहा
रम्भणमिष्यते २२९ गुरोरधो लघु स्थाप्यः पुरस्तादूर्ध्वं व न्यसेत् गुरुभिः पश्चिमे पूर्वे सर्वलघ्ववधिर्विधिः २३० स्यादलिन्दो लघुस्था
नेनालिन्दं गुरुमाश्रितं सदक्षिणे गृहद्वारादलिन्दे दशषड्विधा २३१ ध्रुवसंज्ञं गृहं त्वाद्यं धनधान्यसुखप्रदम् धान्यं धान्यप्रदं नृ
णां जयं स्याद्विजयप्रदम् २३२ नन्दं स्त्रीहानिदं नूनं खरं क्लेशप्रदं विनाशनम् पुत्रपौत्रप्रदं कान्तं श्रीप्रदं स्यान्मनोरमं २३३ सुवक्त्रं भोगद
न्नूनं दुर्मुखं विमुखप्रदम् सर्वदुःखप्रदं क्रूरं विपलं शत्रुभीतिदं २३४ धनदं धनदं ज्ञेयं क्षयं सर्वक्षयावहम् आक्रन्दं शोकजनकं वि
पुलं श्रीयशःप्रदम् २३५ विपुलं नामप्रान्ते शान्धनदं विजयाभिधं सदक्षिणे सप्तसु पादवेदिन्द्रं विधा लघुस्थानसमाश्रितं च गृहस्य पू
र्वादिमेनेषलिन्देष्वेवं भवेयुर्दशषड्भेदाः २३६ भवेयुर्नेशुभालिन्दं गृहं कुपालसंज्ञकं विस्ताराद्द्विगुणं ज्ञेयं दण्डं हस्ताभिविनाशनं २३७

रशालयावाहीनंकार्यं शालाविभागस्तुअनेनैवविधानेनकार्यः पूर्वेकर्ढ्वभागत्रयंत्यक्त्वापश्चिमेभागद्वयंत्यक्त्वायोमध्यगतोभागः स
नाभिः तत्रशालानविधेया अनेनैवप्रकारेणपूर्वादिदिक्षुएकादयोविस्तारदैर्घ्यस्यएकैकंभागंसंयोज्यवातादिकोणेषुउत्तरशाला
हीनत्वान्नदेयंसर्वेएकाद्याः चतुःशालांतावेदसमन्विताः कार्याः अनेनैवप्रकारेणशालासुनेवास्तूनिम्नायव्ययादिषुद्विनेविचिन्त्यनी
या॥ एकशालेआयव्ययादिविचारः कर्तव्यः द्विशालेआयव्ययादिषुद्विनेविचारणीयाः पनःनिर्गमालिंदानिपूर्वादीनियानिवस्तु
दिशंत्रेषुमानांतानिनयाह्यानोतद्वास्तुपरिग्रहः २५३ ब्राह्मणानांचतुःशालंक्षत्रियाणांत्रिशालकं द्विशालेस्यात्तुवैश्यानांशूद्राना
मेकशालकं २५४ सर्वेषामेववर्णानामेकशालंप्रशस्यते एकशालन्द्विशालम्वात्रिशालन्तुर्येशालकम् २५५ यथालिन्दकृद्वकृ र्या
त्तादृक्शालाप्रशस्यते शालादिभिर्नकर्तव्यंनकुर्यात्तुद्व निम्नक ॥ २५६ समांशालान्ततःकुर्यात्समंप्राकारमेवच कुलीरवृश्चिकौमी
नउत्तरद्वारसंस्थिताः २५७ मेषसिंहधनुर्द्वारीपूर्वद्वारेषुसंस्थिताः वृषभंमकरंकन्यायाम्यद्वारेसमाश्रिताः २५८ मिथुनंतुलकुंभौ
चपश्चिमद्वारमाश्रिताः ब्राह्मणाःक्षत्रियाः वैश्याः शूद्राश्चैवयथाक्रमं २५९ यद्दिग्राशयःप्रोक्तास्तस्मिन्शालाप्रशस्यते अथवा
पूर्वभागेतुब्राह्मणाउत्तरेनृपाः २६० वैश्यानांदक्षिणेभागेपश्चिमेशूद्रकास्तथा आग्नेय्यादिक्रमेणैवअन्त्यजावर्णसङ्कराः २६१
ज्ञातिभ्रष्टाश्चचौराश्चविदिक्षुशोभनास्मृताः ब्राह्मणाःक्षत्रियाः वैश्याः शूद्राःप्राग्वादिषुस्मृताः २६२ अष्टोत्तरशतंहस्तविस्ता
रान्नृपमन्दिरम् कार्यंप्रधानमन्यानितथाष्टाष्टानिनानितु २६३ विस्तारंपादसंयुक्तंतेषान्दैर्घ्यंप्रकल्पयेत् एवंनृपाणांपञ्चैवस्युः

णिशुभदानि च २६४ षड्भिःषड्भिर्विहीनाश्च चतुःषष्टिमितस्य च पञ्चैव तस्य विस्तारं दैर्घ्यं षड्भागसंयुतम् षष्टिश्चतुर्विहीनानि वेश्मानि स
चिवस्य च पञ्चभागाष्टभागसंयुक्तं दैर्घ्यं तस्यार्द्धमेव च २६६ नृपाणां महिषीनाञ्च मध्यं तस्य च चैव हि षड्भिःषड्भिश्च वर्ज्यानि अशीनि
त्याश्च तथैव च २६७ त्रिंशद्युतं तद्दैर्घ्यञ्च युवराजगृहाणि च पञ्चांशार्द्धं तस्यैव भ्रातॄणां प्रभवन्ति च २६८ नृपमन्त्रिगृहाणाञ्च
अन्तरे यत्प्रमाणकम् सामन्तराजपुत्राणां प्रवराणां गृहं स्मृतम् २६९ नृपाणां युवराजस्य गृहाणामन्तरेण यत् तद्गृहं कञ्चुकि
वेश्याकलाज्ञानां तथैव च २७० युवराजमन्त्रिणान्तु प्रभवेद्धि यदन्तरम् अध्यक्षदूतगेहन्तत्कर्मसु कुशलाश्च ये २७१ अध्यक्षा
धिकृतानाञ्च रतिकोशप्रमाणकम् चत्वारिंशच्चतुर्हीना पञ्च गेहा भवन्ति हि २७२ षड्भागसंयुतं दैर्घ्यं दैवज्ञभिषजां तथा पुरो
हितानां शुभदं सर्वेषां कथयाम्यतः २७३ हस्तद्वात्रिंशता युक्तं विस्तारस्य द्विजालयं विस्तारसदृशांशास्तु दैर्घ्यं तस्य प्रकल्पयेत्
२७४ त्रयाणां क्षत्रियादीनामालयं पूर्ववचोदितम् नृपसेनापतिर्गेहस्यान्तरं यद्भवेद्धि ह २७५ तत्कोशगेहं भवति रतिगेहं तथैव
च सेनापतिगृहाणाञ्च अन्तरे यत्प्रमाणकम् २७६ चातुर्वर्ण्यस्य यद्गेहं तद्राजपुरुषं मतं अथ पारसवादीनां मातापित्रोर्यदन्तरं
२७७ ब्राह्मणस्य च यन्मानं शूद्रेण सह यद्भवेत् मूर्द्धावसिक्तं क्षत्रासु तथैव मृतकारुकः २७८ पश्चात्प्रमिजनानाञ्च यथेष्टं कुर
येद्गृहं शतहस्तोच्छ्रितं कुर्य्यं चतुःशालं गृहं भवेत् २७९ प्रमितं त्वेकशालन्तु शुभदं तत्प्रकीर्त्तितं सेनापतिनृपादीनां सप्तत्या सहि
तेष्टते २८० व्यासे चतुर्दशाहृते शालामानं विनिर्द्दिशेत् पञ्चत्रिंशद्धते त्वत्रालिन्दं मानं भवेत्ततः २८१ शालात्रिभागतुल्याचक

नेव्यावीथिकावहिः भवनात्पूर्वतोथ्योपंपश्चात्त्वापाश्वयम्भवेत् २८२ तावत्स्तंभंपार्श्वयोस्तुसर्वत्रसुस्थितंभवेत् विस्तारःषोडशांशस्तु
चतुर्हस्तयुतस्त्रयः २८३ तदन्तरस्योच्चतरंसमाणंभवदेहुधः द्वादशभागेनोनंचसमस्तानांप्रकल्पयेत् २८४ यजन्तेराजसूयाद्यैः क
तुभिर्ह्यवनीश्वराः तलैरष्टाष्टभिस्तेषांकारयेद्भवनोत्तमं २८५ तथाचसप्तभिरेवविप्राणांकारयेद्गृहम् अर्द्धषष्ठैः क्षत्रियाणांवैश्यानां
मर्द्धपंचमैः २८६ त्रिभिस्सार्द्धैश्चशूद्राणांभवनंशुभदंस्मृतम् स्वगृहाणांत्रिभागेनप्रमाणमिहलक्षयेत् २८७ विस्तारायामगुणित
तलैःषोडशभिःस्मृतम् विषमाःशुभदाह्येतेसमादुःखप्रदायकाः २८८ व्यासाच्चषोडशोभागःसर्वेषामितयःस्मृताः पक्वेष्टकाकृतानां
त्वनदारूणांकदाचन २८९ नृपसेनापतिगृहमष्टाशीतिशतैर्युताः अङ्गुलानिद्वारमानमवदन्मनीषिणः २९० विप्रादीनांतथास
प्तविंशतिस्त्वंगुलानिच द्वारस्यमानंतत्प्रोक्तंत्रिगुणोच्छ्रायमुच्यते २९१ उच्छ्रायहस्तसंख्यायाःपरिमाणान्यंगुलानिच शास्त्रान्वयेपिबाहुल्यं
कार्यंद्वादशसंयुतं २९२ उच्छ्रायात्सप्तगुणितादशीतिशिष्टुनामता भागःपुनर्नवगुणाशीत्यंशस्ततएवच २९३ दशांशस्तेनहीनस्तस्यायःस्तंभा
नांपरिमाणकं वेदाश्रोरुचकःस्तंभोवज्रोष्टाश्रिरुतोमतः २९४ द्विवज्रःषोडशाश्रिःस्याद्द्विगुणाश्रिःप्रलीनकः समंतवृत्तोवृत्ताख्यःस्तंभः
श्रेष्ठोद्विजोत्तमः २९५ विभज्यनवधास्तंभंकुर्यादुद्वहनंघटं पद्मंचसोत्तरोष्ठंचकुर्याद्भागेनभागतः २९६ स्तंभसमंवाबाहुल्यंभारतुल्यानामु
पर्युपासां भवतितुलायतुलानामूनंपादेनपादेन २९७ अप्रतिषिद्धालिंदंसमंततोवास्तुसर्वतोभद्रम् नृपविबुधसमूहानांकार्यंद्वारैश्चतुर्भिर
पि २९८ ॥ द्विशालानिगृहाणि याम्यशालांन्यसेदादौद्वितीयापश्चिमेततः तृतीयाचोत्तरेण्याप्याचतुर्थीपूर्वपश्चिमा २९९ दक्षिणोदुस्वंक

वि०
कृ०
१०

त्वापूर्वेकवरसंज्ञकं तद्धाजाख्यम्भवेद्देहम्यानरोगप्रदस्मृतम् २०० दक्षिणेदुर्मुखेह्ने हम्यपश्चिमेधान्यसंज्ञकं सिद्धार्थाख्यंद्विशालन्त्वसर्वे
सिद्धिकरन्नृणां २०१ पश्चिमेधान्यनामानमुत्तरेजयसंज्ञकं यमसूर्यन्द्विशालन्तन्मृत्युदन्नाशदंस्मृतं २०२ पूर्वेतुखरनामानमुत्त
रेधान्यसंज्ञकं दण्डाख्यन्तद्विशालंस्याद्दण्डकुर्यात्पुनःपुनः २०३ दुर्मुखन्दक्षिणेकुर्यादुत्तरेजयसंज्ञकं वाताख्यंतद्विशालं
तुबन्धुनाशंधनक्षयम् २०४ खरञ्चपूर्वदिग्भागेपश्चिमेधान्यसंज्ञकं गृहञ्चुल्लीद्विशालन्नामसुखविघ्नप्रदम् २०५ विपक्षं
दक्षिणेभागेपश्चिमेक्रूरसंज्ञकं शोभनाख्यंद्विशालन्नन्दनधान्यकरम्परं २०६ विजयन्दक्षिणेभागेविजयंचैवपश्चिमे द्विशालञ्चै
वकुम्भाख्यंपुत्रदारादिसंयुतं २०७ धान्यञ्चपूर्वदिग्भागेधान्यञ्चैवतुपश्चिमे नन्दाख्यन्तद्विशालञ्चधनदंशोभनंस्मृतं २०८
विजयंसर्वदिग्भागेद्विशालाख्यन्तदेवहि प्रकृत्याख्यनामतद्गेहंशुभदन्त्वनृणांभवेत् २०९ विपुलंसर्वदिग्भागे द्विशालन्नामजा
यते नानिसंपुटसंज्ञानि धनधान्यप्रदानिच २१० धनदंसर्वदिग्भागेसुवक्त्रंवामनोरमं कान्तंनामतुतद्गेहंसर्वेषांशोभनंस्मृतं २११
द्विशालानान्तुगृहानांभेदाश्चैवत्रयोदश फलपाकार्थमेतेषान्नयामोत्रंसुविस्तरात् २१२ पूर्वेयाम्यमथयाम्यंपश्चिमेन्त्मथोत्तरेचैकं या
कृमतीचीमथदक्षिणोत्तरस्यात्तुषड्विधमिदंद्विशालकं २१३॥ अथत्रिशालानि॥ उत्तरशालहीनंयत्त्रिशालन्धनधान्यदं हिरण्य
नाभनामानंराज्ञांसौख्यविवर्द्धनं २१४ प्राग्द्वारशालहीनन्तुसुक्षेत्रन्नामतद्गृहम् वृद्धिदंपुत्रपौत्राणान्धनधान्यसमृद्धिदम् २१५ या
म्यशालाविहीनन्तत्रिशालंचुल्लिसंज्ञकं विनाशनंधनस्यापिपुत्रपौत्रादिनाशनं २१६ पक्षकशालाविहीनन्तुपक्षघ्नंनामतद्गृहं पुत्रा

समः
१०

णान्दोषदस्त्वैवपरन्त्वपुरवासिनां २१७ चत्वारोमीमयाप्रोक्ताभेदाश्चैवचतुर्दश तस्माद्विचार्यकुर्वीतगृहकर्मणि कोविदः २१८ अथच
तुःशालानि अलिन्दानांत्ववच्छेदोनास्तियत्रसमन्ततः तद्वास्तुसर्वतोभद्रंचतुर्द्वारसमन्वितम् एकयामेचतुःशालेदुर्भिक्षेरा
ज्यविप्लवे २१९ स्वामिनोनीयमानायाम्प्रतिष्ठुकन्तदु यति नृपानाम्विबुधानाञ्चगृहंसौख्यप्रदायकं २२० मद्दक्षिणान्तगैः
सर्वैः शालाभित्तिरलिन्दकैः विनापरेणद्वारेणनन्द्यावर्तमितिस्मृतं २२१ श्रेष्ठंसुमारोग्यकरंसर्वेषांशुद्धजन्मनां द्वारालिन्दोग
तस्त्वेकोनेत्रयोर्दक्षिणागतः २२२ विहायदक्षिणद्वारम्वर्द्धमानमितिस्मृतम् शुभदंसर्ववर्णानाम्वृद्धिदंपुत्रपौत्रदम् २२३ पश्चिमो
त्तरतोलिन्दः प्रागन्तौद्वौतदुत्थितौ अन्यस्तन्मध्यविधृतः प्राग्द्वारंस्वस्तिकंशुभम् २२४ प्राग्पश्चिमावलिन्दौयावंतगोतद्भवौप
रौ सौम्यद्वारम्विनाप्यादुचकाख्यन्तुतत्स्मृतम् २२५॥ इतिवास्तुशास्त्रेसमयगृहादिनिर्माणोद्वितीयोध्यायः २॥ अथातः
सम्प्रवक्ष्यामिगृहकालविनिर्णयं यथाकालंशुभंज्ञात्वातदाभवनमारभेत् २२६ मृदुध्रुवस्वातिपुष्यधनिष्ठाद्वितयेरवौ मू
लेपुनर्वसौसौम्यवारेप्रारंभणंशुभम् २२७ आदित्यभौमवर्ज्यन्तुवाराःसर्वेशुभावहाः द्वितीयाचतृतीयाचषष्ठीचपञ्चमीत
था २२८ सप्तमीदशमीचैवद्वादश्येकादशीतथा त्रयोदशीपञ्चदशीतिथयस्तुःशुभावहाः २२९ दारिद्र्यम्प्रतिपत्कुर्याच्चतुर्थी
धनहारिणी अष्टम्युच्चाटनञ्चैवनवमीशस्त्रघातिनी २३० दर्शेराजभयम्भूतेसुतदारविनाशनम् धनिष्ठापञ्चकेनैवकुर्यात्तं
भसमुच्छ्रयं २३१ सूत्रधारंशिलान्यासंभाकारादिसमालभेत् यामित्रन्द्विविधम्वर्ज्यम्वेधोपग्रहकर्तरि २३२ एकार्गलन्तथाल

वि० प्र० ११

त्तासुतिक्ष्णकवसंज्ञकाः पातन्तुद्विविधम्वर्ज्यम्व्यतीपातश्चवैधृतिः २३३ कुलिकङ्कण्टकङ्कालंयमघण्टन्तथैवच जन्मतृतीयप
श्चाङ्कं तारावर्न्यानिभानिच २३४ कुयोगांवनसंज्ञंश्चतथात्रिस्पृक्दुग्धलन्दिनं सापलम्नानिपापांशाः पापवर्गोस्तथैवच २३५ कु
योगास्तिथिवारोत्थास्तिथिभोत्थाभवारजाः विवाहादिषुमेवर्ज्यास्तेवर्ज्याःवास्तुकर्मणि २३६ वास्तुचक्रंप्रवक्ष्यामियच्चव्या
सेनभाषितम् यस्मिन्नृक्षेस्थितोभानुः तदादौत्रीणिमस्तके २३७ चतुष्कमग्रपादेस्यात्पुनश्चत्वारिपश्चिमे पृष्ठेचत्रीणिऋ
क्षाणिकुक्षौचत्वारिवामतः २३८ सुखेभत्रयमेवस्युरष्टाविंशतितारकाः शिरस्थाराग्निदाहायगृहोद्वासोग्रपादयोः २३९ स्थै
र्यंस्यात्पश्चिमेपादेपृष्ठेचैवंधनागमः कुक्षौस्याद्दक्षिणेलाभःपुच्छेचस्वामिनाशनं २४० वामकुक्षौचदारिद्र्यम्मुखेपीडा
निरन्तरं पुनर्वसौनृपादीनाङ्कुर्यात्सूतिकागृहं २४१ श्रवणाभिजितोर्मध्येप्रवेशन्नकारयेत् चरलग्नेचरांशेचसर्वथापरिवर्जे
येत् २४२ जन्मभाञ्चोपचयभेलग्नेवर्गेतथैवच प्रारम्भणंप्रकुर्वीतनैधनंपरिवर्जयेत् २४३ पापैस्त्रिषष्ठायगतैःसौम्यैःकेन्द्र
त्रिकोणगैः निर्माणङ्कारयेद्धीमान्नष्टमस्थैःखलैर्मृतिः २४४ मनुष्यलग्नेसौम्यानान्दृग्योगेयोगतस्तथा कुम्भम्विहायान्यत
रेलग्नेसौम्यग्रहान्विते २४५ जलाशयादिवास्तूनांप्रारम्भःशुभदःस्मृतः २४६॥ अथयोगाः॥ गुरुर्लग्नेरविःषष्ठेद्यूनेसौ
म्येसुखेसिते तृतीयस्थेर्केपुत्रेत्रतद्गृहंशतमायुषं २४७ भृगुर्लग्नेम्बरेसौम्येलाभस्थानेचभास्करे गुरुःकेन्द्रगतोयत्रशतवर्षाणितिष्ठ
ति २४८ हिबुकेज्येम्बरेचन्द्रेलाभेचकुजभास्करौ आरंभःक्रियतेयस्यअशीत्यायुःक्रमाद्भवेत् २४९ लग्नेभृगौपुत्रगेज्येषष्ठेभौम

रामः २११

तृतीयगे खेपस्यगृहारम्भेसवतिष्ठेत्कृतद्वयम् ३५० लग्नस्थोगुरुशुक्रौचरिपुराशिगतेकुजे सूर्येलाभगतेयस्यद्विशताब्दानितिष्ठ
ति ३५१ स्वोच्चस्थोवाभृगुर्लग्नेस्वोच्चेजीवेसुखस्थिते स्वोच्चेलाभगतेमन्देसहस्राणांसमास्थितिः ३५२ स्वोच्चस्वभवनेसौम्यैर्लग्नस्थे
र्वापिकेन्द्रगैः प्रारम्भःक्रियतेयस्यग्रृहंतद्वयंसतिष्ठति ३५३ कर्केलग्नगतेचन्द्रेकेन्द्रस्थानेचवाक्पतिः मित्रस्वोच्चस्थितैःखेटैर्ल
क्ष्मीतस्यचिरम्भवेत् ३५४ हस्त्योत्तराग्न्याहीन्दुविष्णुधान्तजलोडुषु वरुणासहितेष्वेषुकृतंद्वेहंश्रियापुनं ३५५ द्विदैवत्वाष्ट्र
वारीशरुद्रादितिवसूडुषु शुक्रेणसहितेष्वेषुकृतंन्धान्यप्रदंगृहम् ३५६ हस्तार्यमत्वाष्ट्रदस्रचानुराधोडुभेषुच बुधेनसहिते
ष्वेषुधनपुत्रसुखप्रदम् ३५७॥ कुयोगाः॥ शत्रुक्षेत्रगतैःखेटैर्नीचस्थैर्वापराजितैः प्रारम्भेयस्यभवनेलक्ष्मीतस्यविनश्यति
३५८ एकोपिपरभागस्थोदशमेसप्तमेपिवा वर्णाधिपेबलैर्हीनेतद्गृहम्परहस्तगं ३५९ पापान्तरगतेलग्नेमन्दसौम्ययुतेक्षिते अ
ष्टमस्थेऽर्केपुत्रेचअशीत्यब्दाद्विहन्यते ३६१ मन्देलग्नगतेचैवकुजेसप्तमसंस्थिते शुभैरवीक्षितेवापिशतवर्षाणिहन्यते ३६२
लग्नगेशशिनिक्षीणेमृत्युस्थानेचभूसुते प्रारम्भःक्रियतेयस्यशीघ्रन्तद्विविनश्यति ३६३ दशापतौबलैर्हीनेवर्णनाथेनथैवच पी
डितर्क्षगतेसूर्येनविदध्यात्कदाचन ३६४ पितृमूलेन्द्यभाग्यार्कपौष्णभेषुचयत्कृतं ३६५ कुजेनसंहितेष्वेषुगृहंसन्दह्यतेग्निना
३६६ मूलश्चरेवतीचैवकृत्तिकाषाढमेवच पूर्वाफाल्गुनिहस्तेचमघाचैवतुसप्तकं ३६७ एषुभौमेनयुक्तेषुवारेतस्यैवचैवप्रयत्
अग्निनादह्यतेक्षिप्रंपुनर्नाशंप्रजायते ३६८ अग्निनक्षत्रगेसूर्येचन्द्रेवानत्रसंस्थिते निर्मितम्मन्दिरन्नूनमग्निनादह्यतेचिरात्

२६९ ज्येष्ठानुराधकेचैवभरणीस्वातिपूर्वभे धनिष्ठास्वपिक्रक्षेषुशनिस्तिष्ठेद्दिनेऽस्य च २७० क्षपणो नामतः प्रोक्तोऽन्नधान्यादिके गृहे
पुत्रे जातेऽथवा तस्मिन्गृह्यातेयक्षराक्षसैः २७१ प्रासादेष्वेवमेवंस्याद्वापीकूपेषु चैव हि तस्माद्विचार्य कुर्वीत गृहारंभं शुभेष्मुना २
७२ नाशन्दिश शनिमकरालिकुलीरलग्ने मेषेघटे धनुषिकर्मसु दीर्घसत्रम् कन्याझषेमिथुनगेध्रुवमर्थलाभं ज्योतिर्विदः कल
शसिंहवृषेषु सिद्धिं २७३ मध्याह्नेतु कृतन्वास्तुकर्तुर्वित्तविनाशदं महानिशास्वपि तथा सन्ध्ययोर्नैव कल्पयेत् २७४॥ अथ भाव
फलानि॥ लग्ने केवज्रपातः स्यात्कोशहानिश्च शीतगौ मृत्युर्विश्वम्भरापुत्रे दारिद्र्यं विनन्दने २७५ जीवे धर्मार्थकामाः स्युः
पुत्रोत्पत्तिश्च भार्गवे चन्द्रजे कुशलाप्राप्तिर्यावदायुः प्रवर्त्तते २७६ द्वितीयस्थे रवौ हानिश्चन्द्रे शत्रुक्षयं भवेत् भूमिजे वन्धनम्प्रो
क्तं धनाविज्ञानि भानुजे २७७ बुधेद्रविणसंपत्तिर्गुरौ धर्माभिवर्द्धनं यथाकामविनोदेन भृगौ कामं भजेत्फलम् २७८ तृतीयस्थे ग्रहे
षु सौम्येष्वेव विशेषतः सिद्धिः स्यादचिरादेव यथाभिलषितम्प्रति २७९ चतुर्थस्थानगेजीवे पूजां संपद्यते नृपात् चन्द्रजे चार्थला
भः स्याद्भूमिलाभश्च भार्गवे २८० वियोगः सुहृदां भानौ मन्त्रभेदाम्महीसुते बुद्धिनाशो निशानाथे सर्वनाशोऽर्कनन्दने २८१ पञ्च
मेतु सुराचार्ये मित्रं वसुधनागमः शुक्रे पुत्रसुखावाप्तीरत्नलाभस्तथेन्दुजे २८१ सुतदुःखं सहस्रांशौ शशाङ्के कलहः स्मृतः भौमे
कार्यविरोधः स्यात्सौरे वन्धुविमर्दनं २८२ षष्ठस्थानगते सूर्ये रोगनाशम्विनिर्दिशेत् चन्द्रे पुष्टिर्बुधे प्राप्तिः सौरे शत्रुवलक्षयः
२८३ गुरौ मन्त्रोदयः प्रोक्तो भृगौ विद्यागमो भवेत् सर्वज्ञानार्थकौशल्यन्नक्षत्रपतिनन्दने २८४ सप्तमस्थानगे जीवे बुधे दैत्यगुरौ

ह्नि गजवाजिधरित्रीणाङ्कःमाद्याभम्विनिर्दिशेत् ३८५ भास्करेकीर्त्तिभङ्गःस्यात्कुजेविपद्माद्दिशेत् हिमगौक्लेशमायासःपतङ्ग
व्यङ्गताभयम् ३८६ नैधनेचसहस्रांशौ विद्विषोजनितापदः हानिःशीतमयूखेचभौमेसौरेचरुग्भयं ३८७ बुधेमानधनप्राप्तिर्जी
वेचविजयोभवेत् शुक्रेस्वजनभेदःस्यान्मन्त्रस्यापिदेहिनः ३८८ वागीशेनवमस्थानेविद्याभोगादिनन्दनं बुधेविविधभो
गानिजीवेचविजयोभवेत् ३८९ चन्द्रधानुक्षयःप्रोक्तोधर्महानिश्चभास्करे कुजेचार्यक्षयोविद्याद्विजेधर्मदूषणं ३९० दश
मस्थानगेशुक्रेप्राप्यमाप्नानसिद्धयः सुराचार्येमहत्सौख्यम्विजयंस्त्रीधनम्बुधे ३९१ मार्तण्डेवसुवृद्धिश्चन्द्रेशोकविवर्द्धनं भौ
मेत्लागमःप्रोक्तःकोणेकीर्त्तिविलोपनं ३९२ लाभस्थानेषुसर्वेषुलाभस्थानम्विनिर्दिशेत् व्ययस्थानेषुसर्वेषुविनिर्दिशेद्व्ययः
सदा ३९३ स्वोच्चेपूर्णफलःप्रोक्तःपादोनंस्वर्क्षगोग्रहः स्वत्रिकोणेर्द्धफलदःपादम्मित्रगृहाश्रितः ३९४ समर्क्षेरिपुराशौचसम
कष्टफलौग्रहौ नीचस्थोनिष्फलःप्रोक्तोवर्गेसत्फलदःशुभः ३९५॥ इतिवास्तुशास्त्रेतृतीयोऽध्यायः ३॥ चतुर्दशविधाप्रो
क्ताःगृहाश्चोत्तममध्यमाः निन्दिताश्चप्रमाणञ्चकथयामिसमासतः ३९६ गृहन्तद्द्विविधंप्रोक्तंशरीरन्तुपृथग्विधं शरीरन्तु
हन्नामशय्याशयनचक्रके ३९७ शय्यामानंस्वदेहेनसमङ्गुलयंतुरेवमुना सकाशीत्यङ्गुलाशय्यांनवत्यङ्गुलसम्मिता ३९८
तदर्द्धेनचविस्तीर्णापादुकौतुयथाङ्गुलौ आसनन्तुप्रकर्त्तव्यंशय्याविस्तारमानकम् ३९९ विस्तारंपादहीनन्तुतद्विस्तारंप्रकल्प
येत् उपानहौप्रकर्त्तव्यौस्वपादप्रमितौतथा ४०० पादुकेनतथाकार्येअन्यथादुःखशोकदौ अष्टाङ्गुलेनमानेनशय्यामानं

प्रकल्पयेत् ४०१ अथवाह्यपरा प्रोक्ता नृपाणां तु ह्यमिश्रितं पृतनाङ्कुलान्नृपाणान्तु महती परिकीर्तिता ४०२ कुमाराणान्तु नवतिः सा
षडूनान्तु मन्त्रिणां साद्धाद्दशोना वलयपर्यङ्कैः परिकल्पिता ४०३ सुरेन्द्रितानां स्त्रीनृपाह्रीनाधृत्यङ्गुलैस्ततः अर्द्धन्नतोष्टसप्तहीनं
विष्कम्भः परिकीर्तितः ४०४ आयामास्त्वेवप्रमानन्तु पादोच्छ्रायन्तु निर्दिशेत् सर्वेषाञ्चैव वर्णानामेकाशीतिर्मिता स्मृता ४०५ सामन्ता
नान्तु नवतिः सैकाशीतिर्मिता तथा स्वदेहाज्जानिदीर्घा सा न विस्तारे तथैव च ४०६ हीना रोगभयादीर्घा दुःखदा सुखदा समा पा
षाणैर्निर्मितं यत्तु नक्षत्रमन्दिरं स्मृतं ४०७ पक्वेष्टकम्यास्तु नाम भवनं हि तमुत्तमम् अनिष्टकैः सुमनन्तु सुधारङ्कुर्देमेनतु ४०८ मान
स्यम्बर्द्धितं काष्ठैर्वैश्यवर्द्धनं स्मृतं वस्त्रैश्च विजयं प्रोक्तं राज्ञां शिल्पिविकल्पितं ४०९ कालमेतिच विज्ञेयं सष्टमं नृणां जातिभिः उत्त
मानि च चत्वारि गृहाणि गृहमेधिनां ४१० सौवर्णं राजतं ताम्रमायसं च प्रकीर्तितं सौवर्णन्तु कल्पनामराजनं श्रीभवनं तथा ४११
ताम्रेण सूर्यमन्वन्तु चण्डनाम तथायसं देवदानवगन्धर्वयक्षराक्षसपन्नगाः ४१२ द्वादशैते प्रकारास्तु गृहाणां नियताः स्मृताः
जातुषं त्वतिलं नाम प्रायुवं वारिवन्धकं ४१३ एवं सर्वासु जातीषु गृहाणि च चतुर्दश चत्वारश्चोत्तमाप्येते गृहावर्णपूर्वकाः ४१४
शुभदा ब्राह्मणादीनां सर्वेषामपि शोभनाः उत्तमाः शुद्धकालेषु स्थाप्याः शुद्धविधानतः ४१५ काष्ठादिकन्तु गेहेषु कालापेक्षां न कार
येत् तृणादारुगृहारम्भे विकल्पं नैव कारयेत् सौवर्णादिगृहारंभे मासदोषो न विद्यते पञ्चाङ्गशुद्धकाले तु नचैत्र सिंह पौषके ४१७
प्रवेशनञ्च कर्तव्यं महोत्सवदिने तथा पक्वेष्टकानिर्मिते तु शिल्पमानं प्रवक्ष्यते ४१८ काष्ठादिनिर्मिते गेहे स्तंभमानं प्रवक्ष्यते सौवर्णा

दिकेहस्तमानंयातुपाद्येनकिञ्चन ४१९ पादुकोपानहौकार्य्यौअङ्गुलस्यप्रमाणतः मञ्चादिकञ्चासनञ्चअङ्गुलेनैवकारयेत् ४२०
प्रतिमापीठिकाचापिलिङ्गंस्वास्तम्भमेववा गवाक्षाणांप्रमाणञ्चशिलामानन्तथैवच ४२१ खड्गचर्मायुधादीनांप्रमाणञ्चाङ्गुल
निच विषमाःशुभदाःपुंसांसमाःसौख्यविनाशकाः ४२२ अङ्गुलस्यप्रमाणन्तुकथयामिसमासतः नवाष्टसप्तषट्पूर्वाअङ्गुल
परिकीर्तिताः ४२३ त्रिविधस्यापिहस्तस्यप्रत्येकङ्गुमेदर्शितम् ग्रामखेटपुरादीनांविभागोयमविस्तरात् ४२४ परिखाद्वार।
थ्याश्चस्तम्भाःप्रासादवेश्मनाम् तेषान्निर्गममार्गञ्चसीमान्तेत्रांतराणिच ४२५ दिगन्तरविभागाश्चसङ्ख्यायोधनयोस्तथा अध
नःपरिमाणंचक्रोशगव्यूतियोजनैः ४२६ खातककचरणशीवप्रासादापनमापनम् नवयावाङ्गुलेहस्तेनस्यमानंप्रचक्षते ४२७
आयोधनानिचर्माणितथाचंडायुधानिच वापीकूपप्रमाणानितथाचगजवाजिनां ४२८ इक्षुयंत्रारघट्टाश्चहलयूपयुगध्वजां
न्तोयानिचनावश्चशिल्पिनाम्चाप्युपस्करं ४२९ पादुकेवदशीक्छत्रंधर्मोयानानिचैवहि मात्राष्टयेवहस्तेननचदंडाश्चमापयेत्
४३० जालन्धरेहस्तसंख्याविधेचदंड कास्तथा मध्यदेशेक्रोशसंख्यादीपान्तरेतुयोजनं ४३१ चतुर्विंशत्यङ्गुलैस्तुहस्तमानंप्रच
क्षते चतुर्हस्तोभवेद्दण्डःक्रोशस्तद्विसहस्रकं ४३२ चतुःक्रोशंयोजनन्तुवंशोदशकैर्मितः निवर्तनन्त्रिंशतिकैःक्षेत्रंतच्चचतुष्करैः
४३३ ग्रामवेश्मनिदेशाश्चगृहादीनान्निवर्तनं एकाशीतिपदेनैवसर्वंस्थानंचमापयेत् ४३४ प्रासादाद्विविधाप्रोक्ताश्चलाःस्थिरत
स्तथा मण्डपाश्चचतुष्षष्टिःप्राकारादेवतास्रयाः ४३५ विशेषेणापियेकात्रातथायेचाष्टमण्डपाः चतुष्षष्टिपदेनैवसर्वानेनाम्न

मापयेत् ४३६ नगरग्रामकोटादिस्थविराणि च भूस्पृशां स्थयति स्तास्थितयतिप्रविभागेन मापयेत् ४३७ स्निग्धादिभूभागसमुत्थितानां
न्यग्रोधबिल्वद्रुमखादिराणां शमीवटोदुम्बरदेवदारुक्षीरस्वदेशोत्थफलद्रुमाणां ४३८ उपोषितः शिल्पिजनस्तु येषां मध्यानुगीत्यो
नकुमारकेण छिन्द्यात्ततो दिक्पतितोन्नरस्यां शुभे विलग्ने परिगृह्य शङ्कुम् ४३९ कारयमाणं परतस्तु नस्तस्तदर्द्धमानेन ततो तु गृह्य
नीलाद्युत्सेलानि गृहे च तावद्यावत्प्रतिष्ठानसमग्रशङ्कोः ४४० नन्दानिशुल्काकथितेशकोणे तु नाशनाख्ये सुभये निधान्या सुभद्र
नीनिर्ऋतिभागसंस्था भद्रङ्करी मारुतकोणयाता ४४१ वृषाश्च पन्नागपदाङ्कितानां नन्दादिकानाङ्क्रमशः शिलानां स्वविरुद्धा
नां सुदृढीकृतानां सुलक्षणानाङ्ग्रहणं निरुक्तम् ४४२ कूर्मश्च शेषस्य जनार्द्दनश्री ध्रुवश्च मध्ये भवनस्य संस्थाः निवेशनीयाः क्रमशः
शिलानाम्प्रमाणमेतन्मुनिभिः प्रदिष्टम् ४४३ शिलाप्रमाणङ्क्रमशः प्रदिष्टं वर्णानुपूर्वेण नयाङ्गुलानां अथैकविंशं घनविस्तरं तु
विस्तरं स्वेव्यासमितं तदर्द्धम् ४४४ तदर्द्धमानन्त्वथ पिण्डिकास्या दूर्ध्वाधिकान्यूनतरा न कार्या प्रमाणहीनास्तु नमप्रकारिणी व्यङ्गाव्य
मन्नतु विवर्जयेद्धा ४४५ घनानि दामस्तरगेहमाने कार्या शिला शिल्पिजनानुकूला पाषाणगेहे वर्तव्या शिलापाषाणसंभवा शैलजे
शैलजा पीठेष्टकेष्टकं स्मृतः ४४६ शिलान्यासादिको भद्रेस्थूलपादो विधीयते पक्वेष्टनिर्मितेष्वेव तु दृढकानाञ्च कारयेत् ४४७ दृष्ट
का निर्मिते गेहे प्रमाणमिह लक्षयेत् अपरेषाङ्गृहाणां तु शिलामानं न चिन्तयेत् ४४८ आधारस्थानानु शिला प्रकल्पा दृढा मनोज्ञाप
रिमाणयुक्ता सलक्षणा चापरिमाणमानान चाधिकान्यूनतरा न हृष्या ४४९ द्वाराधिपादीन्यतयो गजाम्बाः सम्पूजनीया बलिभिः समं

नैः स्नानार्थमानीय सुतीर्थतोयं ततोपहारैः प्रतिपूज्य कुम्भम् ४५० ध्रुवे शिलायास्तु ततः खनित्वा कुंभं निधाय प्रथमां तु लीयं विप्राद्विवर्णा
नुगतः प्रसन्नः सदक्षिणानन्तु तदर्द्धमानम् ४५१ जलाक्षतैर्व्रीहिसपत्रगव्यमध्वाज्यजातं परिपूर्य सम्यक् ॥ शिलाविन्यासकाले तु
संभारांश्चोपकल्पयेत् ४५२ समुद्रयानि रत्नानि सुवर्णरजतं तथा सर्वबीजानि गन्धाश्च पञ्चगव्यं तथैव च ४५३ स्रक्चन्दनं सुमनसः
सर्पिः क्षीरं च मधुरोचनाः आमिषं च तथा मद्यं फलानि विविधानि च ४५४ नैवेद्यार्थं च पक्वान्नं वस्त्राण्याभरणानि च [illegible]न्मीन
नयास्त्रं तु यथावर्णक्रमेण च ४५५ गन्धादींश्चैव वस्त्रं च पुष्पाणि च तथैव च वास्तुविद्याविधानज्ञैः कार्येत्तु समाहितः ४५६ ॥
इति वास्तुशास्त्रे गृहादिनिर्माणे चतुर्थोऽध्यायः ४ ॥ मोक्तं यद्भवनानां सम्यक्प्रासादानां यथाक्रमं अधुना श्रोतुमिच्छामि वास्तुदेहस्य
लक्षणम् ४५७ पुरा स भगवान्वास्तुपुरुषः परिकीर्तितः सर्वोत्तमसुखो वास्तुपुरुषः परिकल्पितः ४५८ देवैः सेन्द्रादिभिस्तस्मिन्काले
भूमौ निपातितः अवाङ्मुखे निपतितः ईशान्यां दिशि संस्थितः ४५९ शिरोभागे स्थितो वह्निमुखे स्याप स्तनेयमः उत्तरस्याप वत्सश्च
सव्यमार्गसमाश्रितः ४६० पर्जन्याद्यास्तथा नासाद्रक्षश्चैवोरस्थलां समागः सम्प्राप्य पञ्चभुजे विन्यस्य गुरुपोतमे ४६१ हस्ते सविता
सावित्रौ वितथो यमहस्तकः पार्श्वे जठरे विवस्वांश्चास्थितः परितस्सदा ४६२ ऊरू जानु जङ्घ स्फिक् यमाद्यैः परिवेष्टितः एतद्दक्षि
णपार्श्वस्या वामपार्श्वे तथैव च ४६३ मेषादण्डनयनौ च मेढ्रे महाहृदि स्थितः पादे समाश्रितः पितृभिः परिवारितः चत्वारिंशत्पंच
युक्ताः परितो ब्रह्मणस्तथा ४६४ चतुःषष्टिपदे वास्तौ देवा ब्रह्मादयस्तथा कोणेनेषां प्रकर्तव्या स्तिर्यक्कोष्ठगता द्विजाः ४६५ चतुःषष्टिप

दोवास्तुः प्रासादे ब्राह्मणस्ततः ब्रह्मा चतुष्पदो ह्यत्र कोणाश्चार्द्धपदाः स्मृताः ४६६ षोडशकोणगाः सार्द्धपदाख्या योभयस्थिताः विंशतिर्द्विपदाश्चै
वचतुःषष्टिपदे स्मृताः ४६७ जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने नवप्रासादभवने प्रासादपरिवर्तने ४६८ द्वाराभिवर्तनेनद्वे प्रासादे
षु गृहेषु च वास्तूपशमनं कुर्यात्पूर्वमेव विचक्षणः ४६९ वास्तुमण्डलकोणेषु दृश्यमानादिक्रमेण च शङ्कुं नारोपणं शस्तं प्रासादशिखि
नमार्गतः ४७० विशन्तु भूतले नागा लोकपालाश्च सर्वशः अस्मिन्गृहे वतिष्ठन्तु आयुर्बलकराः सदा ४७१ प्रासादारामवापीषु कू
पोद्यानेषु चैव हि तन्नामपूर्विकारोप्या कोणे शङ्कुचतुष्टयं ४७२ अग्निभ्योऽप्यथसर्पेभ्यो ये चान्ये तत्समाश्रिताः तेभ्यो बलिम्प्रयच्छा
मि पुण्यमोदनमुत्तमम् ४७३ एकाशीतिपदं कुर्याद्रेखाभिः कनकेन च पश्चात्पिष्टेन चालिख्य सूत्रेणालोड्य सर्वतः ४७४ दशपूर्वा
यतारेखा दशचैवोत्तरायता सर्ववास्तुविभागे तु विज्ञेया नवकानव ४७५ शान्ता यशोवती कान्ता विशाला प्राणवाहिनी सती च सुम
नानन्दा सुभद्रा सुस्थिता तथा ४७६ पूर्वापरागता ह्येता उदग्याम्याश्रितास्तथा हिरण्या सुव्रता लक्ष्मी विभूतिर्विमला प्रिया ४७७ ज
याकाला विशोका च तथेन्द्रा दशमी स्मृता एकाशीतिपदे ह्येताः पुराणैः परिकीर्तिताः ४७८ श्रिया यशोवती कान्ता सुप्रिया विपरा शिवा
सुशोभा सधना ज्ञेया तथेभा नवमी स्मृता ४७९ पूर्वापरा तथा ह्येताश्चतुःषष्टिपदे स्थिताः धन्या धरा विशाला च स्थिरा रूपा मता निशा
४८० विभवा प्रभवा चान्या सौम्या सौम्याश्रिताः शिराः पदस्याष्टांशको भागस्तत्रोक्तं कर्मसंज्ञकं ४८१ पदहस्तसंख्यया सम्मितानि वे
शाङ्गुलानि विस्तीर्णवंशव्यासो द्विशिरामानं प्रचक्षते ४८२ संयाताश्चापि वंशानां मध्यमानि समानि च पदानां यानि तान्विन्द्यात्सर्वा॰

णिभयदान्यपि ४८३ ननानिपीडयेन्मार्तोप्युचिभारैर्देम्बकीलकैः संभैश्चशल्यदोषैश्चगृहस्वामिनुपीडनं ४८४ नस्मिन्नवयवेतस्य
वधाचैवमजायते कण्डूयमेयदङ्गन्वागृहस्वामीनथैवच ४८५ होमकालेचयज्ञादौनथाभूमिपरीक्षणे अग्नेर्वाविकृतिर्यत्रतत्र
शल्यम्विनिर्दिशेत् ४८६ धनदानिर्दोहमयेपशुपीडास्थिसंभवे रोगस्यापिभयम्प्रोक्तन्नागदन्तोपिदूषकः ४८७ वंशानीम
निवक्ष्यामिवहूनपिपृथक्पृथक् वायुंयावन्नयारोगात्पितृभ्यःशिष्यतस्तथा ४८८ मुख्याद्भूशलेभ्याप्शोकाद्वितयंयावदैवतु
सुग्रीवाददितिंयावङ्गङ्गात्यर्नेन्यमेवच ४८९ एतेवंशाःसमाख्यानाःक्वचिद्दुर्जयएवतु एतेषांयस्तुसंपातःपदमध्येसमन्ततः
४९० एतन्मर्वेशमाख्यातंत्रिशूलङ्कोणकञ्चयत् स्तम्भन्यासेषुवर्ज्यानितुलांवन्धेषुसर्वदा ४९१ सर्वत्रवास्तुनिर्दिष्टःपितृवैश्वा
नरायतः एकाशीतिपदेह्यस्मिन्देवतास्थापनेशृणु ४९२ रेखाणाञ्चफलन्तत्रकथयामिसमासतः वर्णानुपूर्वेणतथाञ्चङ्कुःस्य
र्शनकंपरं ४९३ विप्रःस्पृष्ट्वाततथाशीर्षञ्चक्षुःक्षत्रियकस्तथा विप्रश्चोरुञ्चशूद्राश्चपादौस्पृष्ट्वासमारभेत् ४९४ अङ्गुष्ठकेनवाकु
र्यान्मध्याङ्गुल्यातथैवच प्रदेशिन्यामपितथास्वर्णरौप्यादिधातुना ४९५ मणिनाकुसुमैर्वापितथादध्यक्षतैःफलैः शस्त्रेणयत्तु
नोमृत्युर्वन्धोलोहेनभस्मना ४९६ अग्निर्भयन्तृणेनापिकाष्ठादिलिखितेनच नृपाद्भयनथावक्रैःखण्डैःशत्रुभयम्भवेत् ४९७ विरू
पाचर्मदन्तेनाङ्गारेणास्थिनापिवा नप्रियायभवेद्रेखास्वामिनोमरणन्तथा ४९८ अपसव्यक्रमेवैरंसव्येसंपदमादिशेत् तस्मिन्क
र्मसमारंभेस्तुतन्निष्ठीविततथा ४९९ वाचस्तुपरुषास्तत्रयेचान्येशकुनाधमाः नान्विवर्ज्यप्रकुर्वीतवास्तुपूजनकर्म्मणि ५०० त्र

कचटतपयश्च तिनवदिक्षु च प्राचीप्रभृतिषु वर्णास्तत्परङ्कारयेत्फलम् ५०१ एते वर्णाः प्रश्नकाले मध्ये पद्यैकमक्षरं तेन शल्यम्विजानीया
द्दिशि तस्यां च वेश्मनः ५०२ एतेभ्यो परस्त्वाद्यो प्रश्ने पद्यक्षरं भवेत् तदा शल्यं न जानीयाद्गृहमध्ये विनिश्चयः ५०३ एकाशीतिपदं कु
र्याद्वास्तुवित्सर्ववास्तुषु आदौ सम्पूज्य गणपन्दिक्पालान्पूजयेत्ततः ५०४ धरित्रीकलशं स्थाप्य मातृकापूजयेत्ततः नान्दीश्रा
द्धन्ततः कुर्यात्सुरत्यानभ्यर्च्चयेत्ततः ५०५ अग्निसंस्थापनार्थन्तु मेखलात्रयसंयुतं कुण्डंकुर्याद्विधानेन योन्याकारम्विशेषतः
५०६ स्थण्डिलम्वा प्रकुर्वीत मतिमान्सर्वकर्मसु मध्यस्थान्पूजयेत्सर्वान्पञ्चत्रिंशत्तथैव च ५०७ शिखा चैकपदं प्रोक्तः पर्ज्जन्य
स्तथैव च जयन्तो द्विपदः सूर्य्यः सत्यम्भृशो द्विकोष्ठकौ ५०८ पदैकमन्तरिक्षस्तु वायुश्चैकपदः स्मृतः ५०९ पूषा चैकपदो ह्यस्मि
न्द्विपदो वितथस्तथा द्विपदौ दक्षिणाशास्थौ गृहक्षतयमावुभौ ५१० गन्धर्वमृगराजौ तु द्विपदौ परिकीर्त्तितौ मृगः पितृगणश्चैव
दौवारिकश्चैकपादकः ५११ सुग्रीवपुष्पदन्तौ च द्विपदौ वरुणस्तथा असुरश्च तथा शोको द्विपदाः परिकीर्त्तिताः ५१२ पापरोगस्तथा सर्प
स्त्रयश्चैकपदा मताः मुख भल्लाट सोमाख्यास्त्रिपदास्तु त्रयः स्मृताः ५१३ सर्पश्च द्विपदः प्रोक्तश्चादितिश्च तथैव च द्वितिश्चैकपदा प्रो
क्ता द्वात्रिंशद्बाह्यतः स्थिताः ५१४ ईशानादिचतुष्कोणे संस्थितान्पूजयेद्बुधः आपश्चैवापसावित्रो जयो रुद्रस्तथैव च ५१५ नदन्तगा
श्चैकपदा नीशानादिषु विन्यसेत् अर्य्यमा त्रिपदः पूर्वे सविता च तथैकपात् ५१६ विवस्वान्त्रिपदो याम्ये इन्द्रश्चैकपदस्तथा नैरृते पश्चि
मे मित्रस्त्रिपदः परिकीर्त्तितः ५१७ वायव्ये राजयक्ष्मा च एकपादः प्रकीर्त्तितः उत्तरे त्रिपदां पृथ्वीधरायश्चैकपात्तथा ५१८ मध्ये नव

पदोब्रह्मापीतश्वेतश्चतुर्भुजः आब्रह्मन्ब्रह्मणइतिमन्त्रोयंसमुदाहृतः ५१९ अर्यमाकृष्णवर्णश्च अर्यमणाबृहस्पतिः सविनार
क्तवर्णस्तुउपयामगृहीतकं ५२० विवस्वाञ्शुक्लवर्णश्चविवस्वानादित्यमन्त्रतः इन्द्रोरक्तेन्द्रसुत्रामामन्त्रोपंसमुदाहृतः ५२१
मित्रःश्वेतश्चतन्मित्रंवरुणस्याभिचक्षेदेति राजयक्ष्मारक्तवर्णोत्रभिगोत्राणिमन्त्रतः ५२२ पृथ्वीधरोरक्तवर्णःपृथिवीछन्दमन्त्रतः
आपवत्सःशुक्लवर्णोभयामेतिचमन्त्रतः ५२३ आपःशुक्लवर्णश्चतद्वाहोआपोअस्मान्मातरेनिव सावित्राग्नेयदिग्भागेशुक्लवर्णौ
कपात्तथा ५२४ उपयामगृहीतोसिसावित्रोसीतिमन्त्रतः जयन्तश्वेतोनैऋत्येमर्माणिनेतिमन्त्रतः ५२५ रुद्रोरक्तश्चवायव्येसु
त्रामाइतिमन्त्रतः ईशानेरक्तवर्णश्चतमीशानेतिवैशिखी ५२६ पर्जन्यःपीतवर्णश्चमहाइन्द्रेतिवैतथा जयन्तःपीतवर्णश्चध
न्वनायाइतिस्मृतः ५२७ कुलिशायुधःपीतवर्णोमहाइन्द्रेतिवैतथा सूर्य्योरक्तःसूर्यरश्मिर्हरिकेतिचमन्त्रतः ५२८ सत्यश्चशुक्लो
व्रतेनदीक्षामाप्नोतिमन्त्रतः भृशःकृष्णोमंत्रमस्यभद्रङ्कर्णेतिरेवच ५२९ अन्तरिक्षःकृष्णवर्णोवयंसोमश्चइत्यपि वायुर्धूम्रस्तथाव
र्णोआकायोरितिमन्त्रतः ५३० पूषारक्तवर्णश्चपूषन्तवइतीरितः शुक्लवर्णश्चवितथस्सविनाभयमेतिच ५३१ गृहक्षतःपीतवर्णःस
विताश्चेतिमन्त्रतः यमःकृष्णवपुर्योस्येयमायत्वामथायच ५३२ गन्धर्वोरक्तवर्णश्चमन्द्वावेतिमन्त्रतः भृङ्गराजःकृष्णवर्णोमृत्यु
सुपर्णेतिवातथा ५३३ मृगःपीतश्चतद्विष्णुःमन्त्रेणनिर्ऋतिःस्थितः पितृगणारक्तवर्णापितृभ्येतिचपूजयेत् ५३४ दौवारिकीरक्त
वर्णोद्रविणोदाःपिपीषति शुक्लवर्णश्चसुग्रीवसुषुम्णःसूर्यरश्मिना ५३५ पुष्पदन्तोरक्तवर्णोनक्षत्रेभ्येतिमन्त्रतः वरुणःशुक्ल

पृथक् ५५४ महीद्यौरिति मन्त्रेण पूजनीयो विधानतः येवाह्यदेवताः प्रोक्ताः प्रासादेतान्प्रपूजयेत् ५५५ दुर्गेदेवालये चैव शाल्योद्वा
रे तथैव च विशेषेणैव पूज्याश्च चतुष्षष्टिपदं तथा ५५६ कलशं स्थापयेद्देवं वरुणं वरुणो ततः कलशम्पूरयेत्तीर्थवारिणा सर्व
बीजकैः ५५७ सर्वौषधैः सर्वरत्नगन्धैश्च विविधैस्तथा पल्लवैः पञ्चकाषायैर्मृदाशुद्धोदकेन वा ५५८ ग्रहाणाम्पूजनं तत्र कार
येद्वेदिकोपरि मुरामासी वचा कुष्ठं शैलेयं रजनीद्वयं ५५९ शटी चम्पकमुस्ता च सर्वौषधिगणाः स्मृताः अश्वत्थोदुम्बरप्लक्षचूत
न्यग्रोधसम्भवाः ५६० पञ्चभङ्गास्समे प्रोक्ताः सर्वकर्मसुशोभनाः तुलसी सहदेवी च विष्णुक्रान्ता शतावरी ५६१ मूलान्येतानि
गृह्णीयाच्छतालाभे विशेषतः वटीर्वटोदुम्बरस्य वेतसस्य तथैव च ५६२ अश्वत्थश्चैव मूलश्च पञ्चकाषायकाः स्मृताः अश्व
स्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ५६३ राजद्वारप्रवेशाच्च मृदमानीय निक्षिपेत् सर्वे समुद्राः सरितः सरांसि जलदा न
दाः ५६४ आपान्तु यजमानस्य दुरितक्षयकारकाः ५६५ पृथ्व्यादिं पञ्चचत्वारिंशद्दोषान्तत्र पूजयेत् ५६६ वेदमन्त्रैर्नाममन्त्रैः प्रण
वव्याहृतिभिस्तथा होमस्त्रिमेखलो कार्यः कुण्डे हस्तप्रमाणके ५६७ यवैः कृष्णतिलैस्तद्वत्समिद्भिः क्षीरवृक्षकैः पलाशैः खादि
रैर्वापामार्गोदुम्बरसम्भवैः ५६८ कुशदूर्वामयैर्वापि मधुसर्पिसमन्वितैः कार्यस्तु पञ्चभिर्बिल्वैर्बिल्वबीजैरथापि वा ५६९ हो
मान्ते भक्ष्यभोज्यैश्च वास्तुदेशे बलिं हरेत् नमस्कारान्तयुक्तेन प्रणवाद्येन सर्वतः ५७० वेदोक्तेनैव मन्त्रेण सम्पूज्याद्देवताक्रमात् त
तो व्याहृतिभिर्होमः स्विष्टकृद्धोममेव च ५७१ पूर्णाहुतिं च जुहुयात्संस्रवप्राशनं ततः वास्तुमण्डलदेवेभ्यो बलिन्दद्याद्विधानतः

वि० ५७२ घृतान्नंशिखिनेदद्यात्पर्जन्यायसवोत्पलं जयन्तायचवाल्लुमण्डलदेवेभ्योवलिन्नतः ५७३ कुलिशायुधायपर्ज्जवरत्नयौष्टिकंको
प्र० शंस्तूर्यायधूम्ररक्तवितानापूपसक्तवैः ५७४ सत्यायघृतगोधूमंमत्स्यान्नञ्चभृशायच अन्तरिक्षायशष्कुलीमांसंवापिवशाकुनम्
१८ ५७५ वायसेसक्तवःपोत्ताःपूष्णेलाजास्तृतावुधैः वितथायचणकान्नम्मध्वन्नञ्चगृहक्षते यमायपिशितान्नन्तुगन्धर्वायगन्धो
दनं भृङ्गराजायमेषस्यजिह्वापाश्ववलिंहरेत् ५७७ मृगाययावकन्दद्यात्वलिन्नीलपटस्तथा पितृभ्यःकृशरान्नञ्चतथाद्वौवा
रिकायच ५७८ दन्तकाष्ठेकृष्णापिष्टंदन्तधावनमेवच सुग्रीवायअपूपञ्चयावकन्तुतथैवच ५७९ पुष्पदन्तायपायसम्वरुण
यतथैवच कुशस्तम्भञ्चयमञ्चपैष्टंद्वैरामयन्तथा ५८० असुरायसुराप्रोक्ताशोषायचघृतोदनं गोधायापयक्ष्मणेचरोगायघृ
तमोदनम् ५८१ अहयेफलपुष्पाणिनागकेशरदुत्यपि मुख्यायघृतगोधूमंभल्लाटेमुद्गमोदनं ५८२ सोमायपायसघृतंनागेपौष्टि
कशालंकं अदित्यैपौलिकादित्यैपूरिकायावलिःस्मृताः ५८३ अङ्गोपिक्षीरञ्चतथासवित्रेचकुशोदनं लड्डुकंमरिचञ्चैवज
पायघृतचन्दनम् ५८४ रुद्रायपायसगुडमर्यम्णेशर्करान्वितं पायसञ्चसवित्रेतुगुडपूपवलिःस्मृतः ५८५ विवस्वतेतथादेयंरक्तचंद
नपायसं इन्द्रायसघृतंदेयंहरिद्रालोदनन्तथा ५८६ घृतौदनञ्चमित्रायञ्चाममांसंमधुस्तथा राजयक्ष्मणेचपृथ्वीधरायचमित्रौजसे
५८७ मांसानिकूष्माण्डमितिआपवत्सायवैदधि ब्रह्मणेपञ्चगव्यञ्चयवतिलाक्षतन्दधि ५८८ विविधान्भक्ष्यभोज्यांश्चफलानि रामः
विविधानिच एवन्दत्त्वावलिंसम्यक्दद्यात्तेभ्योहिरण्मयं प्रणवाद्यैश्चतुर्थ्यन्तैर्नाममन्त्रेणमन्त्रवित् सर्वेभ्योपिहिरण्यञ्चब्राह्मणो १८

कर्त्ताक्षेमकर्त्ताभव अमुंपशुंदीपसहितंसुराण्डमाषभक्तवलिंगृह्णगृह्णस्वाहा ६०६ इतिवलिंदत्वा नैर्ऋत्यान्दिशिभूतेभ्योसन्ध्याका
लेविशेषतः वलिन्दद्याद्विधानेनमन्त्रवित्ततःपुण्यमी पुरोहितस्तथायाज्यद्गुडोदनमथापिवा ६०७ कुल्माषेणतुसम्मिश्रैःयाव
कापूपसंयुतैः वटुकपकान्नसंयुक्तैर्वालक्रीडनकैस्तथा ६०७ फलैश्चदाडिमीवीजैःकालपुष्पैर्मनोरमैः मात्राननाशनमित्तावलि
कर्मणिचोदिताः ६०८ मन्त्राः देव्योदेवामुनीन्द्राभुवनपतयोदानवासर्वसिद्धाः यक्षारक्षांसिनागागरुडमुखखखगाः गुह्यकादेवदे
वाः डाकिन्योदेववेश्याहरिदधिपतयोमातरोविघ्ननाथाः प्रेताभूताःपिशाचाःपितृवननगराद्याधिपाःक्षेत्रपालाः ६०९ गन्धर्वाः
किन्नरास्सर्वेजटिलाःपितरोग्रहाः कूष्माण्डाःपूतनारोगाज्वरावैतालकाःशिवाः ६१० अस्तक्क्सुताचपिसुनाभस्ममांसान्यने
कशः लम्वक्रोडातथाहृस्वाःदीर्घाशुक्लास्तथैवच ६११ खंजाःस्थूलास्तथैकाक्षानानापक्षिमुखास्तथा व्यालास्याउष्ट्रवक्त्राश्च
वक्त्राक्रोडवर्जिताः ६१२ धमनामातमालाभाद्विपाभामेघसन्निभाः गवलाभाक्षितिनिभाअशनीसनसन्निभाः ६१३ द्रुतगाश्चम
नोगाश्चवायुवेगसमाश्चये वहुवक्त्रावहुशिरावहुवाहुसमन्विताः ६१४ वहुपादावहुदृशःसर्पाभरणभूषिताः विकटामुकुटाकेचित्त
थावैरत्नधारिणः ६१५ सूर्यकोटिप्रतीकाशाविद्युत्सदृशावर्चसः कपिलाद्भुतभुग्वर्णाप्रमथावहुरूपिणः ६१६ गृह्णन्तुवलयस्सर्वेनृ
नायान्तुवलिर्नमः आचार्यस्तुततोनीत्वाकलशम्मन्त्रमन्त्रितं ६१७ स्वयम्भत्यङ्मुखोभूत्वाप्राङ्मुखंयजमानकं स्वशाखोक्तेनमन्त्रे
णआगमोक्तेनवातथा ६१८ स्नापयेत्कुम्भतोयेनमंत्रैःपौराणिकैस्तथा वैदिकैर्वातंयामन्त्रैःसवस्त्रस्यःकुटुम्ववान् ६१९ दारपुत्र

समेतस्य यजमानस्य ऋत्विजः सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः ६२० ब्रह्मा विष्णुश्च शम्भुश्च साध्याश्च समरुद्गणाः आदित्या
वसवो रुद्रा अश्विनौ च भिषग्वरौ ६२१ अदितिर्देवमाता च स्वाहा सिद्धिः सरस्वती कीर्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहूस्तथा
६२२ दितिश्च सुरसा चैव विनता कद्रुरेव च देवपत्न्यश्च याः प्रोक्ता देवमातर एव च ६२३ सर्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां ग
णाः नक्षत्राणि मुहूर्ताश्च पक्षाश्चाहोरात्रसन्धयः ६२४ सम्वत्सरा दिनेशाश्च कला काष्ठाः क्षणा लवाः सर्वे त्वामभिषिञ्चन्तु काल
स्यावयवाः शुभाः ६२५ एते चान्ये च मुनयो वेदव्रतपरायणाः सशिष्यास्तेऽभिषिञ्चन्तु सदाराश्च तपोधनाः ६२६ वैमानिकाः सुर
गणाः सागराः सरितस्तथा मुनयश्च महाभागा नागाः किम्पुरुषाः खगाः वैखानसा महाभागा द्विजा वैहायनाश्च ये सप्तर्षयः सदारा
श्च ध्रुवस्थानानि यानि च ६२७ मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः भृगुः सनत्कुमारश्च सनकोऽथ सनन्दनः ६२८ सनातन
श्च दक्षश्च जैगीषव्यो भगन्दनः एकतश्च द्वितश्चैव त्रितो जाबालिकश्यपौ ६३० दुर्वासा दुर्विनीतश्च कण्वः कात्यायनस्तथा मा
र्कण्डेयो दीर्घतपाः शुनःशेपो विदूरथः ६३१ और्वः सम्वर्तकश्चैव च्यवनोऽत्रिः पराशरः द्वैपायनो यवक्रीतो देवराजः सहानुजः ६३२
पर्वतो नारदश्चैव वल्यः पुण्यान्यायतनानि च प्रजापतिर्दितिश्चैव गावो विश्वस्य मातरः ६३३ वाहनानि च दिव्यानि सर्वे लोकाश्चराच
राः अग्नयः पितरस्तारा जीमूताः खं दिशो जलं ६३४ एते चान्ये च बहवो वेदव्रतपरायणाः सेन्द्रा देवगणाः सर्वे पुण्यश्रवणकीर्तनाः
६३५ तोयैस्त्वामभिषिञ्चन्तु सर्वोत्पातनिवर्हणे यथाभिषिक्तो मघवानेतैर्मुदितमानसैः ६३६ दृष्टैर्नैर्ष्याभार्ये वृत्राणि स्वहीन [illegible]

महत्कणैः अभिषेकम्प्रकुर्वीतमन्त्रैःपौराणिकैस्तथा ६३७ ततःशुद्धोदकैःस्नानंयजमानस्यकारयेत् वास्तुमण्डलमध्येतुब्रह्मस्थाने
प्रपूजयेत् ६३८ सुरूपांपृथिवींदिव्यरूपाभरणसंयुतां स्त्रीरूपांप्रमदावेषधारिणींसुमनोहराम् ६३९ महाव्याहृतिपूर्वेणपूजयेत्तां
धरांपुनः धारयेतिचमन्त्रेणसम्प्रार्थ्यचपुनःपुनः ६४० सर्वदेवमयोवास्तुर्वास्तुदेवमयंपरम् ततःस्वनाममन्त्रेणध्यात्वातत्रचपूज
येत् ६४१ ततश्चतुर्मुखंदेवंप्रजेशंचाह्वयेत्ततः गन्धादिभिश्चतंपूज्यप्रणम्यचपुनःपुनः ६४२ वास्तुपुरुषनमस्तेस्तुभूमिशय्यारत
प्रभो मद्गेहेधनधान्यादिसमृद्धिंकुरुसर्वदा ६४३ वाचयित्वाततःस्वस्तिकर्कटंपरिगृह्यच सूत्रमार्गेणतोयस्यधारामादक्षिणेनच
६४४ पातयेत्तेनमार्गेणसर्वबीजानिचैवहि सर्वबीजजलैरेवतन्मार्गेणापिसञ्चरेत् ६४५ इतिवास्तुविधानन्तुकृत्वातांस्तानमण्डपात्
समानीयशिलान्तत्रसूत्रधारोगुणान्वितः ६४७ तत्रदिक्साधनंकुर्याद्गृहमध्येसुसाधिते ईशानादिक्रमेणैवस्वर्णकुद्दालकेनतु ६
४८ खनित्वाकोणभागेतुमध्येचैवविशेषतः नाभिमात्रंतथागर्तंशिलानांस्थापनंशुभं ६४९ सूत्रच्छेदेभवेन्मृत्युःकीलेचावाङ्मु
खेगदः स्कन्धाच्युतेशिरोरोगःगह्वराद्गृहपतेःक्षयः ६५० गृहेशस्थपतीनाञ्चस्मृतिलोपोथमृत्युदः भग्नेकीर्तिवधःकुम्भेकुलस्योत्सर्गे
वर्जिते ६५१ सूत्रेप्रसार्यमाणेतुगर्दभोयदिरौतिचेत् तत्रास्थिशल्यंजानीयात्पृष्ठगालादिलंघितं ६५२ रविदीप्तादिशियातुतत्र
चेत्परुषोरवः सस्पृष्टाङ्गसमानेचतस्मिन्शल्यम्विनिर्दिशेत् ६५२ शिलाविन्यासकालेतुवासन्नेद्विरदादयः तस्मिन्तद्देहसंभूतम
स्थिशल्यम्विनिर्दिशेत् ६५४ कुब्जम्वामनकंभिक्षुम्वैद्यंरोगातुरानपि दर्शनंसूत्रकालेतुवर्जयेच्छ्रियमिच्छता ६५५ श्रुतोहुलहुला

नाञ्चमेघनादुर्न्दिनेन च गर्जितानमपि सिंहानां स्वनितं घनदम्भवेत् ६५६ स्त्रेस्मार्य्यमाणेतुदीप्तोग्निर्यद्दिदृश्यते गृहघोघोरकारहो
भवेद्राज्यमकराटकम् ६५७ शङ्खतूर्य्यादिनिर्घोषवसुभिर्विपुलङ्गृहं योषितानान्तुकानाञ्चक्रीडनञ्चित्तवर्द्धनं प्रारम्भेचशुभागेहगो
पनेमृत्युरोगदा स्तम्भारोपणमध्यान्तवेप्रोदृष्टिरुत्तमा ६५९ दारुणाच्छेदनेचैवदुःखशोकामयप्रदाः परीक्षासमयेचैवनतु
सौख्यप्रदास्स्मृता ६६० छत्रध्वजपताकानान्दर्शनेनिधिसम्भवः पूर्णकुम्भेतुसम्प्राप्तिःस्थैर्य्यङ्कुलकलध्वनौ गृहकोणेषुसर्वे
षुपूजाङ्कृत्वाविधानतः ईशानमादितङ्कृत्वाप्रादक्षिण्येनविन्यसेत् ६६२ अनेनैवविधानेनस्तम्भद्वारादिरोपणं वास्तुविद्यावि
धानस्तुकारयेत्तुसमाहितः ६६३ नन्दाभद्राजयारिक्तापूर्णानाम्नीयथाक्रमं नन्दायाम्पद्ममालिख्यभद्रासिंहासनन्तथा ६
६४ जयायान्तोरणञ्चत्रंरिक्तायाङ्कुम्भमेवच पूर्णायाञ्चचतुर्वाकुम्विष्णुसंज्ञेरवयेहुधः ६६५ ॐभूर्भुवःस्वरितिनयासर्वानाव
हनंस्मृतं ब्रह्माविष्णुश्चरुद्रश्चईशानश्चसदाशिवः ६६६ एतेपंचैवपञ्चेषुभूतानावाहयेत्पुनः स्नपनञ्चततःकुर्य्याद्विधिदृष्टेनकर्म
णा ६६७ पञ्चभिःकलशैर्युक्तास्तासान्नामान्यतःशृणु पद्मश्चैवमहापद्मंशंखञ्चविजयन्तथा पञ्चमंसर्वतोभद्रम्मन्त्रेणावाहयेत्तु
तं ६६८ अग्निमूर्द्धेतिचयदापञ्चयज्ञेतिवारुणैः ६६९ अश्वत्थेतिकषायेनपल्लवेनजलेनच गायत्र्यांचगवाम्मूत्रैर्गन्धद्वारेतिगोम
यैः ६७० आप्यायस्वेतिक्षीरेणदधिक्रावोतिवैदधि घृतवतीतिघृतेनचमधुवातेतिवैमधुः ६७१ पयःपृथिव्यामितिचपञ्चगव्येन
संस्नपेत् देवस्यत्वेतिचकुशैःकाण्डात्काण्डाच्चदूर्वया ६७२ गन्धद्वारेतिगन्धेनपञ्चगव्येनवैतथा यात्रोषधीरोषधीभिर्याफलिनी

तिफलोदकैः ६७३ नमस्तेनिरुषसृङ्ग मृदाधान्यमसीतिच धान्यादीञ्जिघमितिचकलशेनतथैवच ६७४ ओषधयइत्यस्तैयवोसी
तियवोदकैः तिलोसीतितिलैःपंचनद्येतिचनदीजलैः ६७५ इमम्मेगङ्गेतिचतथातीर्थानामुदकेनच नमोस्तुरुद्रेभ्योमृदानेगद
तिसमुद्भवात् ६७६ स्योनापृथिवीचमृदासीनायांमधुभिश्रवा हिरण्यगर्भइतिवासुवर्णोदकसंभवैः ६७७ रूपेणवेतिरौप्येणयद
स्वायेतिवस्त्रजैः सन्तापनीर्थपयसाततःशुद्धोदकेनच ६७८ सम्मार्ज्यशुभ्रवस्त्रेणगन्धेनालिप्यसर्वतः ब्रह्मादीन्पूजयेत्तत्रनाममन्
त्रेणवातथा ६७९ उपचारैःषोडशभिर्मूलमध्यशिरःस्वपि स्नपनस्याभिषेकस्तुवेदमन्त्रैश्चकारयेत् ६८० आब्रह्मन्निति-नन्द्यांचभद्र
कर्णेभिवैतथा जातवेदसेतितथायमायत्वेतिमन्त्रकैः ६८१ पूर्णादर्वेतिपूर्णायाकुम्भेणापिसमाचरेत् मूलमध्येपिचतयानामभिर्मन्तम
न्त्रकैः ६८२ ब्रह्मेयज्ञानमितिचविष्णोरराटमेवच नमस्तेरुद्रइतिचइमन्देवेतिसंस्नापयेत् ६८३ शीर्षंचावाहनङ्कार्यन्तद्विष्णोपरमम्पदम्
इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ६८४ समस्येदेव्याधियाइतिचत्र्यम्बकंयजामहेतिच मूर्द्धानंदिवेत्युचयासम्पूज्यचयथावि
धि ६८५ तेभ्योहिरण्यंदत्वाचवस्त्रालङ्कारवाससी ततस्तुपुण्यघोषेणशिलान्यासम्प्रकल्पयेत् ६८६ ततस्तुलग्नेसम्प्राप्तेपञ्चव
द्यानिवादयेत् नन्दाम्प्रगृह्यचशिलान्तथाधारशिलान्न्यसेत् ६८७ तत्रोपरिन्यसेत्सम्यक्कलशम्मन्त्रमन्त्रितं सर्वौषधिजलोपेतम्पा
रदाज्यमधुप्लुतं ६८८ पिहितंरत्नगर्भञ्चतेजोराशिभिरन्वितं सदाशिवस्वरूपंचध्यात्वापञ्चोपचारकैः ६८९ सम्पूज्यदीपम्विन्य
स्यवामभागेयगतिकैःतत्रोपरिन्यसेन्नन्दांसंपूज्यचयथाविधि ६९० नाभिर्मेतिचमन्त्रेणशिरोभवेतिवैतथा मार्यनस्वनतस्कुर्यात

गमोक्तेन मन्त्रवित् ६९१ नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहं प्रासादे तिष्ठ संहृष्टा यावच्चन्द्रार्कतारकाः ६९२ आयुष्कामं श्रियं देहि देव
वासिनि नन्दिनि। अस्मिन्रक्षा त्वया कार्या प्रासादे यत्नतो मम ६९३ महापद्मं न्यसेद्भद्रं स्थापयेद्रत्नगर्भितं तत्र भद्रां च संस्थाप्य पूजयेन्नाममं
त्रकैः ६९४ भद्रवर्णे निकृष्टचयास्थापयेद्वाहरणस्तथा भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ६९५ आयुर्दा कामदा देवि सुखदा च
सदा भव त्वामत्र स्थापयाम्यद्य गृहेऽस्मिन्भद्रदायिनि ६९६ आधारोपरि विन्यस्य सकलपृष्ठाङ्कसंज्ञकं कोणे संपूज्य विधिवज्जयां संस्था
पयेत्ततः ६९७ गर्गगोत्रसमुद्भूतां त्रिनेत्रां च चतुर्भुजां प्रासादे स्थापयाम्यद्य जयाख्यां कमलोचनां ६९८ नित्यं जयाय भूत्यै च स्वामिनो भवभार्ग
वि। जातवेदस्मेति मंत्रेण पूर्वोक्तेन च मंत्रितः ६९९ आधारोपरि विन्यस्य विजयं कलशं ततः रिक्तां संस्थापयेत्तत्र मंत्रेणानेन मंत्रवित् ७०० त्र्य
म्बकं यजामहे ति तथावाहणमंत्रकैः स्थापयेत्प्रार्थयेत्तद्वद्रिक्तां रिक्तार्तिहारिणीं ७०१ रिक्ते त्वं मित्र दोषघ्ने सिद्धिभुक्तिप्रदे शुभे सर्वदा स
र्वदोषघ्नि तिष्ठास्मिंश्च नन्दिनि ७०२ आधारे विन्यसेन्मध्ये सर्वतोभद्रसंज्ञकं पूर्णरत्नान्वितं पुष्टं सर्वमंत्राभिमंत्रितं ७०३ तत्र संपूज्य
विधिवद्वास्त्वात्र सदा शिवं तत्रोपरि न्यसेत्पूर्णां पूर्णानन्दप्रदायिनी ७०४ पूर्णे त्वं सर्वदा पूर्णान्लोकान् कुरु काश्यपि। आयुर्दा कामदा देवि
धनदा सुतदा तथा ७०५ गृहाधारा वास्तुमयी वास्तुदीपेन संयुता त्वामृते नास्ति जगतामाधारस्त्वं जगत्प्रिये ७०६ पूर्णा दर्शीति मन्त्रेण इमं मे
देवेति वै तथा ७०७ मूर्द्धानं दिवेति च तथा शान्तिमन्त्रैस्तथैव च सहस्रशीर्षेति षोडशभिः पिमीलेति वै तथा ७०८ इषे त्वोर्जे त्वा च तथा
ह्रीति तथा पुनः शन्नो देवीति मंत्रेण स्थापयेत्प्रयतः शुचिः ७०९ सूर्यादिना हृष्टीकल्पमादक्षिण्येन सर्वतः ईशानादिक्रमेणैव स्थाप्याः सर्वा

र्यस्तिह्वये ७१० अग्नेयाचैववर्णानामाग्नेयादिक्रमेणच सर्वेषामपिवर्णोनाङ्कं चिदिक्षुनिसर्गयः ७११ यान्तुदेवगणास्सर्वे पूजामाद
यपार्थिवात् इष्टकामसमृध्यर्थम्पुनरागमनायच ७१२ ततस्तुप्राङ्मुखोभूत्वाआचार्यायनिवेदयेत् दक्षिणाम्ब्राह्मणेतद्वद्यथोवि
त्तानुसारतः ७१३ उदङ्मुखायचततःसमस्तेतिपुनःपुनः गांवत्सांस्वर्णसुतांतथावासोयुगान्विताः ७१४ यज्ञान्तेग्राप्नुतान्वस्त्रान्नाचार्या
यनिवेदयेत् देवज्ञश्चततस्तोष्यस्थपतीन्वैष्णवानपि ७१५ दक्षिणाश्चतयोर्देयाद्वृतच्छायाम्विलोकयेत् रक्षाबन्धोमंत्रपाठःस्यायु
षश्चसमाचरेत् ७१६ ऋत्विग्भ्योदक्षिणान्दद्याच्छिष्टेभ्यश्चस्वशक्तितः दीनान्धकृपणेभ्यश्चदद्याद्वित्तानुसारतः ७१७ शिलाविर्गा
स्तुसन्तोष्यदानमानैस्तथैवच ७१८ सम्प्राप्नोतिनरोलक्ष्मींपुत्रपौत्रधनान्वितां ७१९॥ इतिशिलान्यासेपञ्चपञ्चाशोऽध्यायः ५५ अ
थातःसंप्रवक्ष्यामिप्रासादानांविधानकं देवोरुद्रस्तथाविष्णुर्ब्रह्माद्यास्सुरसत्तमाः ७२० प्रतिष्ठाप्यशुभेस्थानेअन्यथातेभयावहाः ग
र्भादिलक्षणोधात्रीमन्थवादेनयाभवेत् ७२१ वर्णेनचसुरश्रेष्ठसामहीसर्वकामदा पितामहस्यपुरतःकुलान्यष्टौतुयानितु ७२२ ता
स्येदात्मनासार्द्धंविष्णोर्मन्दिरकारकः अपिनःसत्कुलेकश्चिद्विष्णुभक्तोभविष्यति ७२३ येध्यायेतिसदाभक्त्याकरिष्यामोहरेर्गृहं
तेषाम्विलीयतेपापंपूर्वजन्मशतोद्भवम् ७२४ सुरवेश्मनियावन्तोद्विजेन्द्राःपरमाणवः तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ७२५
मासादेमृन्मयेपुण्यंयैनत्कथितम्पुरा तस्माद्दशगुणंपुण्यंकृतेशैलमयेभवेत् ७२६ ततोदशगुणंलोहेताम्रेशतगुणंततः सहस्रगु
णितंरौप्येतस्माद्रुग्मेसहस्रकं ७२७ अनन्तफलमाप्नोतिरत्नचित्रेमनोहरे कनिष्ठंमध्यमंश्रेष्ठङ्कारयित्वाहरेर्गृहं ७२८ स्वर्गन्त्वैष्ण

२३

वंलोकंमोक्षञ्च लोकमात् वाल्येक्रीडमानायेपांशुभिर्भवनंहरेः ७२९ वासुदेवस्यकुर्वन्तितेपितल्लोकगामिनः याभूमिःशस्यतेगेहे
साप्रासादविधौतथा ७३० योविधिर्गृहनिर्माणेशिलान्यासस्यकर्मणि प्रासादादिषुसंज्ञेयःचतस्त्रस्तुशिलास्तथा ७३१ नन्दाभद्राज
यापूर्णाश्चाग्नेयादिषुविन्यसेत् चतुष्षष्टिपदेवास्तुप्रासादादिषुविन्यसेत् ७३२ भद्राच्चतुष्पदेह्यत्रशेषाःस्वस्वपदेस्थिताः वास्तु
पूजाविधिश्चात्रगृहस्थापनकर्मवत् ७३३ सम्पूज्यवास्तुविधिवच्छिलान्यासंततश्चरेत् आदावेवसमासेनशिलालक्षणमुत्तमम्
७३४ शिलान्यासविधानज्ञैर्ज्ञेयमेतदनन्तरं शिलावापीष्टकावापिचतस्त्रोलक्षणान्विता ७३५ प्रासादादौविधानेनन्यस्तव्यासुमनो
हराः चतुरस्राःसमाःकृत्वासमन्ताद्धस्तसम्मिता ७३६ विस्तारस्यत्रिभागेनबाहुल्येनसुसम्मिता शिलानामिष्टकानाञ्चप्रमाणंलक्षणं
स्मृतं ७३७ नन्दाद्यधिष्ठिताज्ञेयाशिलावाप्यथवेष्टका शिलारूपाण्यथोविन्यासनन्दाद्याश्चेष्टकास्मृताः ७३८ सम्पूर्णास्तुनलास्निग्धा
सुसमालक्षणान्विता कुशदूर्वाङ्किताधन्याःसध्वजछत्रचामराः ७३९ सकुम्भास्तरणोपेताःकूर्ममत्स्यफलान्विताः दर्पणंहस्तिवज्रा
ङ्काःप्रशस्तद्रव्यलाञ्छिताः ७४० शस्तपक्षिमृगाङ्काश्चवृषाङ्कास्सर्वदाहिताः स्वस्तिकावेदिकायुक्तानन्द्यावर्ताङ्कलाञ्छिताः ७४१ पद्म
दिलक्षणोपेताःशिलाःसर्वार्थसिद्धिदाः तथागोवाजिपादाङ्काःशिलाधन्याःसुखावहाः ७४२ क्रव्यादमृगपादाङ्काःनशस्तापक्षिणस्त
या दिङ्मुखावहुदीनाश्चदीर्घह्रस्वाक्षनान्विताः ७४३ विवर्णास्फुटिताभग्नाःसंत्याज्यालक्षणच्युता प्रशस्तप्राणिरूपाङ्काःप्रशस्तद्र
व्यलाञ्छिताः ७४४ यथोक्तलक्षणोपेताःशिलानित्यंसुखावहाः इष्टकानांसमासेनलक्षणंशृणुसाम्प्रतं ७४५ एकवर्णासुपक्वाश्चवद्ध

वि॰
मु॰
२३

जीर्णाश्च वर्जिताः अप्यङ्गारान्विता नेष्टा कृष्णवर्णा सशर्करा ७४६ भग्नाश्च विभ्रमाहीना वर्ज्जनीयाः प्रयत्नतः सुप्रमाणा रक्तवर्णाश्चतुरस्रा
मनोरमाः ७४७ नन्दाया गृह्यमानेन अङ्गुलैः परिकल्पिताः शिलान्यासम्प्रकर्त्तव्यः प्रासादे तु शिलामये ७४८ इष्टकानां तु विन्यासः प्रा
सादे चेष्टकामये तस्याः पीठम्प्रकुर्वीत तावदेव प्रमाणतः ७४९ आधारनामा तु शिला सुदृढा सुमनोहरा शैलजे शैलजः पीठश्चेष्टके चेष्ट
कः स्मृतः ७५० शिलान्यासादिको भद्रे मूलपादो विधीयते गर्तान्विधाय कोणेषु चतुर्वेदिसमन्वितान् ७५१ तत्रोपरि वस्तुस्थानां तण्डुला
न्नस्य पूरणं आग्नेयादिक्रमेणैव तासां स्थानानि कल्पयेत् ७५२ तत्राधारशिलान्यस्य स्थिरो भवति मन्त्रतः प्रतिष्ठाप्य चतुर्ष्वेव कोणेषु च
निधापयेत् ७५३ तेषां क्रमेण तन्मध्ये कलशं स्थापयेत्क्रमात् पद्मश्चैव महापद्मः शङ्खो मकरकस्तथा ७५४ चत्वारः कलशाश्चैते दिव्या
मंत्रेण मंत्रिताः पल्लवैः सर्वगन्धैश्च सर्वौषधिभिरन्विताः ७५५ रत्नैः समुद्रजैर्युक्ताश्चाष्टधातुभिरन्विताः पुण्यतीर्थोदकैर्युक्ताः कृत्वा दु
ग्धसंभवाः ७५६ तत्रोपरि न्यसेन्नन्दां शुक्लपक्षे शुभे दिने संस्थाप्य पूर्णतोयेन स्नापयेत् फडिति मन्त्रतः ७५७ पुनः स्नात्वाथ मन्त्रेण संमार्ज्य
परिशुद्धयेत्।। ॐ नन्दायै नमः गन्धादि उपचारान्प्रदापयेत् ७५८ गीतवादित्रघोषेण वेदध्वनियुतेन च प्रागुत्तरशिरस्कां तां स्थापयेत्प्रयत
स्तुधीः ७५९ ततो रत्नोयं संगृह्य फडिति पूजयेत्पुनः दिव्यरूपां सुवर्णाभां सर्वाभरणभूषितां सर्वलक्षणसंपूर्णां परितुष्टां स्मिताननां
७६० ध्यात्वा स्वमंत्रैरर्घ्यं प्रणम्य च पुनः पुनः ७६१ आवाहयेत्ततो नन्दां मन्त्रैर्वैदिकतान्त्रिकैः संपूजयेत्पुनस्तां च वस्त्रगन्धादिना ततः ७
६२ धूपयित्वाथ सामान्यमुद्राश्च ध्यायमंत्रवित् कल्पयेच्चैव नैवेद्यं दधिमांसादिसंयुतम् ७६३ ॐ नन्दायै नमः एतेहि पूजयेच्च कुड्मा

रामः
२३

नमः ॐ नन्दे त्वं सुद्धिनी पुंसां त्वामत्र स्थापयाम्यहं ७६४ प्रासादे तिष्ठ संहृष्टा यावद्वै चन्द्रतारकं आयुष्कामं श्रियन्नन्दे त्वं मिलं सनन्दे
७६५ अस्मिन्रक्षा त्वया कार्या प्रासादे यत्नतः सदा इति मंत्रमनुच्चार्य आग्नेये तु ततः पुनः ७६६ भद्रां संपूजयेत्तद्वन्नाममन्त्रेण पूर्ववत् भद्रे
त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ७६७ आयुष्कामप्रदा देवि लोकानां चैव सिद्धिदा नैरृत्ये स्थापयेत्तां च जयां तद्वत्प्रपूजयेत् ७
६८ नाममन्त्रेण पूर्वोक्तमन्त्रेण च तथा पुनः ॐ जये त्वं सर्वदा भद्रे संनिष्ठ स्थापयाम्यहं ७६९ नित्यं जयावहा देवि स्वामिनः शीघ्रदा भव
वायव्ये स्थापयेच्चान्यां जयां सर्वार्थसिद्धये ७७० ईशाने स्थापयेत्पूर्णां पूर्ववत्संप्रपूज्य च ॐ पूर्णे त्वं तु महाविद्ये सर्वसंदोहलक्षणे ७
७१ संपूर्णं सर्वमेवैतत्प्रासादे कुरु सर्वदा शिलानामिष्टकानां तु वा वनन्तदनन्तरं ७७२ नकार्यमनुमनसापि तु लुप्तमिच्छता आचा
र्याय पञ्चगव्यमथवन्तां हेमसंयुतां ७७३ ऋत्विग्भ्यो दक्षिणां दद्यान्शिल्पिभ्यश्च स्वशक्तितः दैवज्ञं पूजयेच्छक्त्या स्थापितिं च विशेषतः
७७४ ब्राह्मणान्भोजयेच्छक्त्या दीनान्धांश्चैव तोषयेत् एवं वास्तुवलिं कृत्वा भजेत्षोडशभागिकां ७७५ तस्य मध्ये चतुर्भागं तत्सिन्गर्भं च
कारयेत् भागद्वादशकं सार्द्धं ततस्तु परिकल्पयेत् ७७६ चतुर्भागेन भित्तीनामुच्छ्रायः स्यात्प्रमाणतः द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायाच्च
मानतः शिखरार्द्धस्य चार्द्धेन विधेया तु प्रदक्षिणा चतुर्दिक्षु तथा ज्ञेयो निर्गमस्तु तथा बुधैः ७७८ गर्भसूत्रद्वये भागे विस्तारे मण्डपस्य तु आय
तस्य विभागार्धैर्भद्रयुक्तः सुशोभनः ७७९ पंचभागेन संभज्य गर्भमानं विचक्षणः भागमेकं गृहीत्वा तु प्राग्जीवं कल्पयेद्बुधः गर्भसूत्रस
मो भागद्वयेनोस्तु मंडपः एतन्नामानन्तु दिष्टं प्रासादस्येह लक्षणं ७८० अथान्यच्च प्रवक्ष्यामि प्रासादे लिङ्गमानतः लिङ्गपूजाप्रमाणेन क

र्तव्यापीठिकाबुधैः ७८१ पीठिकार्द्धेनभागेस्यात्तन्मानेनतुभित्तयः वाह्यभित्तिप्रमाणेनउत्सेधस्तुभवेत्ततः ७८२ भित्त्युच्छ्रायात्तुद्विगुणःशृ
ङ्गस्यसमुच्छ्रयः शिखरस्यचतुर्भागःकर्त्तव्यास्तुप्रदक्षिणा ७८३ प्रदक्षिणायास्तुसमस्त्वग्रतोमण्डपोभवेत् तस्यचार्द्धेनकर्त्तव्यस्त्व
ग्रतोमुखमण्डपः ७८४ प्रासादाच्चिर्गतौकार्यौकपोतौगर्भमानतः ऊर्द्ध्वम्भित्त्युच्छ्रायात्तस्यमंजरीन्तुप्रकल्पयेत् ७८५ मंजर्याश्चार्द्धभागे
नशुकनासंप्रकल्पयेत् ऊर्द्ध्वन्तथार्द्धभागेनवेदीबन्धोभवेदिह ७८६ वेद्याश्चोपरियच्छेषङ्कण्ठमामलसारकं एवम्विभज्यप्रासादंशो
भनङ्कारयेद्बुधः ७८७ अथान्यत्सम्प्रवक्ष्यामिप्रासादस्येहलक्षणम् गर्भप्रमाणेनप्रासादप्रमाणंशृणुतद्विजाः ७८८ विभज्यनवधा
गर्भंमध्येलिङ्गस्यपीठिका पादाष्टकन्तुरुचिरंपार्श्वतःपरिकल्पयेत् ७८९ मानेनानेनविस्तारोभित्तीनान्तुविधीयते पादेपंचगुणंक
त्वाभित्तीनामुच्छ्रयोभवेत् ७९० सएवशिखरस्यापिद्विगुणःस्यात्समुच्छ्रयः चतुर्धाशिरोभज्यत्र्यर्द्धभागद्वयस्यवा ७९१ शुकनासंप्र
कुर्वीततृतीयेवेदिकामता कण्ठमामलसारंतुचतुर्थेपरिकल्पयेत् ७९२ कपोलयोस्तुसंहारोद्विगुणोस्यविधीयते शोभनैर्वप्रवल्ली
भिस्तद्वत्केशैश्वविभूषितः ७९३ प्रासादेयस्तुनीयस्तुमयानुभ्यन्निवेदितः सामान्यमपरन्तद्वत्प्रासादंशृणुतद्विजाः ७९४ त्रिभेदङ्कारयेत्क्षेत्रं
यत्रतिष्ठन्तिदेवताः रथङ्कत्वातुमानेनवाह्यभागविनिर्गतं नेमीपादेनविस्तीर्णप्रासादस्यसमन्ततः गर्भन्तुद्विगुणङ्कुर्यान्नेमीमानंभवे
दिह ७९६ सस्वभित्तीनामुत्सेधोद्विगुणःशिखरोमतः प्राग्ग्रीवंपञ्चभागेननिश्वासस्तस्यचोच्यते ७९७ कारयेच्छिखरन्तद्वत्प्राकारस्य 
विस्तारतः प्राग्ग्रीवस्तस्यमानेननिष्काशेनविशेषतः ७९८ कुर्याद्वापञ्चभागेनप्राग्ग्रीवङ्कर्णमूलतः कारयेत्कनकन्तत्रगर्भान्तेद्वारसू 

लतः ७९९ एवन्तु [illegible]विधङ्कुर्याज्ज्येष्ठमध्यकनीयसं लिङ्गमानानुभेदेन रूपभेदेन वा पुनः ८०० एते सामान्यतः प्रोक्ता नामतः शृणुताधुना मे
रुमन्दिरकैलाशकुंभसिंहमृगास्तथा ८०१ विमानछन्दकस्तद्वच्चतुरस्रस्तथैव च अष्टास्रः षोडशास्रश्च वर्तुलः सर्वभद्रकः ८०२ सिंह
स्यनन्दनश्चैव नन्दिवर्द्धन एव च सिंहो वृषः सुवर्णश्च पद्मकोथ समुद्गकः ८०३ प्रासादनामतः प्रोक्ता विभागं शृणुत द्विजाः शतशृङ्गश्चतु
र्द्वारो भूमिका षोडशोच्छ्रितः ८०४ नानाविचित्रशिखरो मेरुः प्रासाद उच्यते मन्दरो द्वादशः प्रोक्तः कैलासो नवभूमिकः ८०५ विमानछ
न्दकं तद्वदनेकशिखरान्वितः सप्ताष्टभूमिकस्तद्वत् सप्तभिर्नन्दिवर्द्धनः ८०६ विंशाण्डकसमायुक्तो नन्दनः समुदाहृतः षोडशास्रकसंयुक्तो
नानारूपसमन्वितः ८०७ अनेकशिखरस्तद्वत्सर्वतोभद्र उच्यते चन्द्रशालासमोपेतो विज्ञेयः पंचभूमिकः ८०८ वलभीछन्दकस्तद्वत्
शुकनासत्रयान्वितः वृषस्योच्छ्रायतस्तुल्यो मंडितस्त्रित्रिवर्जितः ८०९ सिंहः सिंहगतिर्ज्ञेयो गजो गजसमस्तथा कुंभः कुंभाकृतिस्तद्वद्
मिका नवकोच्छ्रयः ८१० अङ्गुलीपुटसंस्थानपंचांडकविभूषितः षोडशास्रः समंतात्तु विज्ञेयः स समुद्गकः ८११ पार्श्वयोश्चन्द्रशालास्यः
उच्छ्रयो भूमिकाद्वयं तथैव पद्मकः प्रोक्तः उच्छ्रायो भूमिकाद्वयं ८१२ षोडशास्रः स विज्ञेयो विचित्रशिखरः शुभः मृगराजस्तु विख्यातः
चन्द्रशालाविभूषितः ८१३ प्राग्ग्रीवेन विशालेन भूमिकाषट्समुन्नतः अनेकचन्द्रशालस्तु गजः प्रासाद उच्यते ८१४ पर्यंकगरुडो वै
गरुडो नाम नामतः सप्तभूम्युच्छ्रयस्तद्वच्चन्द्रशालात्रयान्वितः ८१५ भूमिकास्तु षडशीतिर्विहिताः सर्वतो भवेत् तथान्यो गरुडस्तद्वदु
च्छ्रायो दशभूमिकः ८१६ पद्मकः षोडशास्रस्तु भूमिद्वयमथाधिकः पद्मतुल्यप्रमाणेन श्रीतुष्टक इति स्मृतः ८१७ पञ्चांडकस्त्रिभू

मिस्तु गर्भेहस्तचतुष्टयं वृषोभवतिनाम्नायः प्रासादः सार्वकामिकः ८१८ सप्तकापञ्चकाश्चैव प्रासादायेमयोदिताः सिंहस्यतेस माज्ञेयाये
चान्येन्यत्समाख्याताः चन्द्रशालैस्समोपेताः सर्वेप्राग्ग्रीवसंयुताः ऐष्टिकादारवाश्चैवशैलजाश्चसतोरणाः मेरुः पञ्चाशद्धस्तस्यान्मंदा
रः पंचहीनकः चत्वारिंशत्तुकैलासस्त्वनुस्त्रिंशद्वितानकः ८१९ नन्दिवर्द्धनकस्तद्वद्द्वात्रिंशत्समुदाहृतः त्रिंशद्भिर्नन्दनः प्रोक्तः सर्वतोभद्रक
स्तथा ८२० एतेषोडशहस्ताः स्युश्चत्वारोदेववल्लभाः कैलासोमृगराजस्तुविमानच्छन्दकोगजः एतेद्वादशहस्ताःस्युरेतेषांसिंहनाद
कः गरुडोष्टकरोज्ञेयः सिंहोदशउदाहृतः ८२२ एवमेवप्रमाणेनकर्तव्याःशुभलक्षणाः पद्मराक्षसनागानामष्टहस्तःप्रशस्यते ८२३
तस्मान्नैवेश्यः सप्तज्येष्ठलिङ्गाःशुभावहाः श्रीवत्सकादयश्चाष्टौमध्येयस्यउदाहृताः ८२४ तथाहंसादयःपंचकन्यासेशुभदामताः
अथातःसंप्रवक्ष्यामिशुभालिङ्गस्यलक्षणं ८२५ लिङ्गदैर्घ्याङ्गुलैर्लिङ्गविस्ताराद्गुणयेद्बुधः लिङ्गविस्तारमानेनत्रिगुणंपीठवि
स्तरम् ८२६ गर्भगेहस्यविस्तारंत्रिभागंपरिकल्पयेत् तेषुभागेषुचैकेनपीठविस्तारमाचरेत् ८२७ दीर्घंकुर्वीतपीठानांत्रिविष्णुभागा
वसानकं मूलेमध्येतयोर्देवब्रह्मविष्णुहरांशकं ८२८ पीठिकालक्षणंवक्ष्येयथावदनुपूर्वशः पीठोच्छ्रायंयथावच्चभागान्षोडशकल्प
येत् ८२९ भूमावेकःप्रविष्टःस्याच्चतुर्भिर्जगतीमताः वृत्तोभागस्तथैकःस्यात्कृताद्वृत्तस्तुभागतः ८३० भागैस्त्रिभिस्तथाकंठकंठयदा
स्त्रिभागतः भागैकमूर्ध्वकेयश्चशेषभागेनपट्टिका ८३१ प्रविष्टंभागमेकन्तुजगतीयावदेवतु निर्गमस्तुपुनस्तस्यायावद्वैपोषपट्टिका
वारिनिर्गमनार्थन्तुतत्रकार्यम्प्रमाणतः लिङ्गवाणादिकन्तुयोन्यन्तांशम्वात्रिभागिनं ८३२ पञ्चभागंद्विभागंवायथायोग्यंयथास्थितं

सप्तभागकृतेलिङ्गे चतुरंशान्निवेदयेत् ८३३ पीठमध्यगतेगर्त्तेत्रिभागश्चैकभागकं पञ्चभागेतुभागांस्त्रीन्द्विभागेद्वंयथाक्रमं ८३४ एवम्का
णादिलिङ्गानाम्प्रवेशः शिवनोदितः स्थूलंशिरस्तथांमूलंउन्नतेनन्तुसंशिरः ८३५ निम्नप्रदेशंइतिस्यातन्मालगेहादिलिङ्गके अग्रांतस्तु
स्वष्टस्तनाङ्गुल्यास्पृष्टम्मुरवंशिरः ८३६ ज्येष्ठामध्याकनिष्ठाचत्रिविधावलक्षणशिलाः त्रिगुणम्विस्तृनङ्कुर्यादन्यथाबाधकारकः ८३७
उक्तानामपिपीठानाम्विस्ताराद्धिकाङ्गुलैः त्रिभागपीठविस्तारङ्कुर्यात्तन्नैकभागतः ८३८ दीर्घङ्कुर्यात्प्रणालन्त्वतन्त्रिभागैकविस्तरं
मध्येसूत्रचतुष्केतुस्थाप्यकूर्मशिलानतः ८३८ तद्गर्भेविन्यसेत्कूर्म्मंसौवर्णन्द्वादशांसुरवं नवरत्नादिभिस्सार्द्धंभूमिञ्चहृदयेन्यसेत्
८३९ तस्यैवहितनत्कूर्म्मं...अंवज्रलेपकैः लिप्तायथागतिनोयेनमोक्षोलिरव्योक्तकर्त्तनः ८४० ततस्तेजोविधांशक्तिङ्कुलिनासनरूपिणीं
स्थापयेन्मूलमन्त्रेणतुदैवज्ञोक्तेमुहूर्त्तके ८४१ अथातःसंप्रवक्ष्यामिमण्डपानाञ्चलक्षणं मण्डपाश्चवरान्वक्ष्येप्रासादस्यानुरूपतः ८४२
त्रिविधामण्डपाख्यायाः श्रेष्ठमध्यकनीयसः नामतस्तान्प्रवक्ष्यामिशृणुध्वन्द्विजसत्तमाः ८४३ पुष्पकःपुष्पभद्रश्चसुवृत्तोमृतनन्दनः कौ
शल्योवुद्धिसङ्कीर्णोगजभद्रोजयावहः ८४४ श्रीवत्सोविजयश्चैववास्तुकीर्णस्तुनन्धरः जयेभद्रोविलासश्चसंश्लिष्टःशत्रुमर्दनः ८४५
भाग्यपंचोनन्दनश्चमानवोमानभद्रकः सुग्रीवोहर्षणश्चैवकर्णिकारपदाधिकः ८४६ सिंहश्चयामभद्रश्चशत्रुघ्नश्चतथैवच सप्तविंश
तिरस्त्वेतानालक्षणंशृणुतद्विजाः ८४७ स्तम्भायत्रचतुष्षष्टिःपुष्पकःसउदाहृतः द्वाषष्टिःपुष्पभद्रस्तुषष्टिस्तुवृत्तउच्यते ८४८ अष्टपंचा
शकःस्तंभःकथ्यतेमृतनन्दनः कौशल्योथद्विपञ्चाशच्चतुःपंचाशतान्तुनः ८४९ नाम्नातुवुद्धिसङ्कीर्णोद्विहीनोराजभद्रकः जयावहस्त्व

पंचमाच्छ्रीवत्सयुक्त्वाहीनकः ८५० द्वात्रिंशाद्वर्मोत्तमयवर्गीयत्वविंशतिः षड्विकोष्ठाविंशतिमिर्द्विरष्टासिंहउच्यते ८५१ द्विहीनो याम
भद्रस्तु सुभद्रश्चनिगद्यते यामभद्रः कथितो द्वादशालंभसंयुतः ८५२ मण्डपाः कथिता ह्येते यथावल्लक्षणान्विताः त्रिकोणं वृत्तमध्ये
तु अष्टकोणं द्विरष्टकं ८५३ चतुष्कोणं च कर्तव्यं संस्थानं मण्डपस्य तु राज्यं च विजयं चैव आयुर्वर्द्धनमेव च ८५४ पुत्रलाभः श्रियः पु
ष्टिः स्त्रीपुत्रादि शुभमाङ्गल्यं एवं तु शुभदः प्रोक्तः अन्यथा तु भयावहः ८५५॥ इति षष्ठोऽध्यायः ६ अथातः शृणु विप्रेन्द्र द्वाराणां लक्षणमुत्त
मं द्वाराणां चैव विन्यासाः पञ्चाशच्च दश स्मृताः ८५६ त्रिषु त्रिषु च मासेषु मेषादिषु वै क्रमात् पूर्वादिक्रमयोगेन सुस्वं सदनं शुभं
८५७ अन्यदिग्मुखगेहं तु दुःखशोकभयप्रदं तस्मात्तद्दिङ्मुखं द्वारं प्रशस्तं नान्यदिङ्मुखं ८५८ अथ द्वितीयः त्रिषु त्रिषु च राशीनां कु
म्भादीनां स्थिते रवौ पूर्वादिषु न कर्तव्यं द्वारं चैव यथाक्रमात् ८५९ अथ तृतीयः कर्ककुम्भगते सूर्ये मुखं स्यात्पूर्वपश्चिमे मेषकीटगते
वापि मुखं चोत्तरदक्षिणे ८६० मुखानि चान्यथा कर्तुर्व्याधिशोकभयानि च अन्यराशिगते सूर्ये न विदध्यात्कदाचन ८६१ अथ चतुर्थः
सिंहे तु पश्चिमं द्वारं तुलायां चोत्तरं तथा कर्कटे पूर्वदिग्द्वारं द्वारं पश्चिमवर्जितं ८६२ कर्कटे कैं च सिंहस्थे पूर्वद्वारं न शोभनं तुलायां वृ
श्चिके चैव द्वारं पश्चिमवर्जितं ८६३ कर्कटे कें च सिंहस्थे याम्यद्वारं न शोभनं सूर्ये मकरकुम्भस्थे सौम्यद्वारं च निन्दितं ८६४ नृयुक्कन्या
धनुर्मीनसंस्थिते र्के न कारयेत् द्वारं तं भौनथा दारुसञ्चयं च विवर्जयेत् ८६५ माघे तैहि च दारूणां छेदनं नैव कारयेत् मोहात्कुर्वन्ति
ये मूढास्तद्देहे ग्निभयं भवेत्॥ अथ पंचमः पूर्णादि लष्टमी यावत्पूर्वास्यं परिवर्जयेत् उत्तरास्यं न कुर्वीत नवम्यादि चतुर्दशी ८६६ ॥

अथषष्टः प्रत्यङ्मुखंब्राह्मणानांक्षत्रियाणान्तथोत्तरे वैश्यानाम्पूर्वदिग्द्वारंशूद्राणांदक्षिणेशुभं ८६७ अथसप्तमः कर्कटोवृश्चिकोमी
नोब्राह्मणाःपरिकीर्तिताः मेषसिंहोधनुर्धोरीराशयःक्षत्रियाःस्मृताः वैश्यावृषमृगौकन्याशूद्राःशेषाःप्रकीर्तिताः वर्णक्रमेणपूर्वादिक्
दक्षिणेपश्चिमेतथा ८६९ योयस्यराशिर्मर्त्यस्यतस्यद्वारंततश्चरेत् दिशितद्विपरीतंतनुकर्तुर्नेष्टफलंभवेत् ८७० अथाष्टमः धनुर्मेष
सिंहेयदाराशिनाथस्तदापूर्वभागेन्यसेद्द्वारमाद्यं मृगःकन्यकागोषुद्वारंचयाम्येतुलायुग्मकुंभेतथापश्चिमास्यं ८७१ कर्कटेवृ
श्चिकेमीनेराशिस्थेचोत्तरेन्यसेत् अथनवमः कृत्तिकाद्यंसप्तपूर्वेमघाद्यंसप्तदक्षिणे ८७२ मैत्राद्यंपश्चिमेज्ञेयंधनिष्ठाद्यंसप्तउत्तरे प
रिभसंस्थितेचन्द्रेतोद्दिग्द्वारम्प्रशस्यते ८७३ पृष्टदक्षिणवामस्थेनविदध्यात्कदाचन॥ अथदशमः प्रागादिविन्यसेद्द्वारंस्तम्भमार्गेण
वैद्विजा ८७४ सिंहेचोत्तरदिग्द्वारंपश्चिमास्यंविवर्जयेत् प्राग्दक्षिणेगजेद्वारंवृषेप्राच्यान्नचान्यदिक् ८७५ पृष्टद्वारन्नकर्तव्यंकु
णेष्वेवविशेषतः अथद्वादशः त्रिषुत्रिषुचमासेषुमार्गशीर्षादिषुक्रमात् ८७६ पूर्वदक्षिणतोयेशपौलस्त्याशाद्कुमादगुः द्वारेवाहि
भयम्प्रोक्तंस्तम्भेवंशविनाशनं ८७७ अथत्रयोदशः रक्षःकुबेराग्निजलेशयाम्येवायव्यकाष्ठासुचभानुवारान् वसेतमध्याष्टसुहि
सुचक्रेसुखेविवर्ज्योगमनेगृहेच अथचतुर्दशः ध्रुवन्त्वाद्यंगृहंप्रोक्तंसर्वद्वारविवर्जितं धान्येपूर्वदिशिद्वारंदक्षिणेजयसंज्ञकं ८७८
प्राग्दक्षिणेनन्दगृहेपश्चिमेखरमेवच प्राक्पश्चिमेतथाकान्तेप्रत्यग्याम्येमनोरमे ८८० सुवक्त्रेचोत्तरेवर्ज्यन्दुर्मुखेचोत्तरेतथा प्रा
गुत्तरेक्रूरसंज्ञेविपदोदक्षिणेतथा ८८१ धनदेपश्चिमेवर्ज्यंक्षयंचोत्तरपश्चिमे आक्रन्देदक्षिणन्त्याज्यंविपुलेपूर्वमेवच ८८२ विज

वि०
मु०
२७

या रथ्यञ्चतुर्द्वारमलिन्दैः सर्वतोयुतं राज्ञां सिद्धिकरम्प्रोक्तं सर्वतोभद्रसंज्ञकं ८८३ अथपञ्चदशः द्वारचक्रम्प्रवक्ष्यामि यदुक्तम्प्रल
णापुरा सूर्यभाद्द्वचतुष्कन्तु द्वारस्योपरिविन्यसेत् ८८४ द्वेद्वेकोणेप्रदातव्यं शाखायुग्मे द्वयन्द्वयं अधस्त्रीणि देयानि वेदामध्येप्रति
ष्ठिताः ८८५ राज्यंस्यादूर्द्धनक्षत्रे कोणेषूद्वासनंभवेत् शाखायांलभतेलक्ष्मीं ध्वजेचैवमृतिर्भवेत् ८८६ मध्यस्थेसुभवेत्सौख्यं वि
ज्ञानीयंसदाबुधैः अश्विनीचोत्तराहस्तस्तिष्यश्रुतिमृगाःशुभाः ८८७ स्वातीपूष्णोथरोहिण्यां द्वारशाखावरोपणे पञ्चमीधनदाचैव
मुनिनन्दवसौशुभं प्रतिपत्सुनकर्तव्यङ्कृते दुःखमवाप्नुयात् द्वितीयायान्द्रव्यहानिः पशुपुत्रविनाशनं ८८८ तृतीयारोगदाज्ञेयाच
तुर्थीभङ्गकारिणी कुलक्षयेतथाषष्ठीदशमीधननाशिनी ८८९ विरोधकृत्त्वमावास्यानस्याच्छाखावरोपणं केन्द्रत्रिकोणेषुशुभैः पा
पैस्त्र्यायारिगैस्तथा ८९० पूर्णाम्बरेशुद्धियुते द्वारशाखावरोपणं शुभंस्यात्कुम्भवारेचपञ्चकेनत्रिपुष्करे आग्नेयधिष्ण्येसोमेह्निनकु
र्यात्काष्ठरोपणम् प्रणम्यवास्तुपुरुषं दिक्पालंक्षेत्रनायकं ८९१ द्वारशाखारोपणञ्च कर्तव्यंतदनन्तरम् शुभंनिरीक्ष्यप्राकुर्यान्नान्यथा
परिवर्जयेत् ८९२ कुड्यंभित्त्वानकुर्वीत द्वारंतत्रसुखेप्सुभिः कृत्तिकाभगमैत्रन्तु विशाखाचपुनर्वसुः ८९३ तिष्यंहस्तंतथार्द्राचक्रमा
त्पूर्वेषुविन्यसेत् मैत्रश्चित्रास्वातीपौष्णंचनैर्ऋत्यंयमदैवतं वैश्वदेवाश्विनीविध्राक्रमाद्दक्षिणमास्थिताः पित्र्यम्प्रोष्ठपदार्यम्णंतथामांसा
न्नदैवतं ८९५ वारुणाश्विनसाविश्वक्रमात्पश्चिमसंस्थिता स्वात्यश्लेषाभिजित्सौम्यं वैष्णवम्वासवन्तथा ८९६ याम्यञ्चाद्रस्यङ्क्रमात्सौम्य
द्वारेषुचविनिर्दिशेत् द्वारक्षैस्तद्दिशाद्वारं स्थापयेद्वाविचक्षणः ८९७ स्तंभाद्यारोपणंशालनयैवविधिनाबुधैः अधोमुखैस्त्रनक्षत्रैर्दे

रम
२७

हस्तीखातमेवच ८९८ तिर्यङ्मुखैर्दृढैर्द्वारस्तंभैर्द्वारावरोपणं प्रासादेषुचहर्म्येषुगृहेष्वन्येषुसर्वदा ८९९ आग्नेय्यामथमंस्तंभंस्थापयेत्तद्वि
धानतः स्तंभोपरियदापश्येत्काकगृध्रादिपक्षिणः ९०० दुर्निमित्तानिसंवीक्ष्यतदाकर्तुर्नशोभनं तस्मात्स्तंभोपरिछिन्नंशस्त्वांफलवती
तुवा ९०१ धारयेद्दथवावस्त्रंबुधोरत्नादिनिःक्षिपेत् दिक्साधनंचकर्तव्यंशिलाद्वारावरोपणं ९०२ स्तंभेचवास्तुविन्यासेतथाचगृहक
र्मणि प्रासादेवातथायज्ञे मण्डपेवलिकर्मसु ९०३ क्रान्तिकोदयतः प्राचीप्राचीस्यात्कुवणोदये चित्रास्वात्यन्तरेप्राचीद्दिनप्राचीरवेःस्थि
ता ९०४ यद्दिवाश्रवणंपुष्यंचित्रास्वात्योर्यदन्तरं एतत्प्राचीदिशारूपंदशपुमात्रोदितेविधे ९०५ द्वादशांगुलमानेनशंकुनावाप्रकल्पये
त् शिलातलेसुसंशुद्धेसुलिप्तेसमतांगते ९०६ द्विघ्नशंकुप्रमाणेनसममण्डलमालिखेत् तन्मध्येस्थापयेच्छंकुंस्थूलंकृत्वाद्विरेखिकं घु
तिप्रवेशनिर्गमस्थानेबिन्दुंप्रकल्पयेत् अपरेह्नितन्मध्येशंकुमारोपयेत्ततः ९०७ तत्रबिन्दुद्वयंतत्मानयोर्यदन्तरं तेनानुमानेन
विषुवद्दिवसांतश्चसाधयेत् ९०८ यावन्तोव्यवहियन्तेतावदन्तोनिक्षिपेत् शोधयेद्योजयेद्वापिदक्षिणोत्तरयोर्द्वयोः ९०९ क्रान्त्योर्यद्व
शिष्येततत्प्राचीसमुदाहृता ९१० अथद्वारफलानि ईशानमादितः पूर्वेआग्नेय्यादक्षिणेस्थिताः नैरृत्यात्पश्चिमेज्ञेयावायव्यात्सौम्य
दिक्स्थिताः ९११ पूर्वादिक्रमयोगेनहुताशेग्निभयंभवेत् पर्जन्येप्रचुरानार्योजयन्तेवहुवित्तदा ९१२ माहेन्द्रेनृपवात्सल्यंसूर्येतिको
पनाभवेत् सत्येनृतत्वंविज्ञेयंभृंगस्त्वरभ्रंशंभवेत् ९१३ अन्तरिक्षेचविज्ञेयोनित्यश्चौरसमागमः दक्षिणेस्यात्पुत्रनाशोवायव्येप्रेष्यमे
वच ९१४ नीचत्वम्वितथेज्ञेयंगृहेतिष्ठतिसंततिः शूद्रकर्माभवेद्याम्येनैरृत्येकर्तृनाशनं ९१५ अथधनंभगराजास्येमृगेपुत्रविनाशनं

पश्चिमे पित्र्ये स्वल्पायुर्धनं दौवारिके महद्भयं ११६ सुग्रीवे पुत्रनाशः स्यात्पुष्पदन्ते तु वर्द्धनं वरुणे क्रोधभोगित्वं नृपभङ्गस्तथासुरे ११७
नित्यानि शोषिता शोके पापाख्ये पापसञ्चयः उत्तरे रोगवधो नित्यं नागे रिपुभयं महत् ११८ मुख्ये धनसुतोत्पत्तिर्भल्लाटे विपुलाः श्रियः
सोमे तु धर्मशीलत्वं भुजङ्गे बहुवैरता ११९ कन्यादोषाः सदादित्ये त्वदितौ धनसञ्चयः पदे पदे कृतं श्रेष्ठं द्वारं सत्फलदायकं १२० पदद्व
यकृतं यच्च यद्द्वा मिश्रफलप्रदं सूत्रेन वह्नजे भागे वसुभाग तथैव च १२१ प्रासादे कारयेद्विद्वान्नावासे न विचारणा बहुद्वारेष्वलिन्देषु न
र नियमः स्मृतः १२२ सदैव सदने जीर्णे द्वारे साधारणेष्वपि मूलद्वारं प्रकर्तव्यं घटस्वस्तिकसन्निभं १२३ पश्चात्पत्रप्रथमागणाकीर्णं प्र
स्यते वीक्षिप्रमाणान्यतो द्वारं दक्षिणपश्चिमे १२४ न कार्यं प्रथमाकीर्णं सुखिनस्त्वाप्रकल्पयेत् प्राकारे च प्रणायान्त्र्यद्वारं प्रागुत्तरं प्र
सेत् १२५ द्विशालो सुवनद्वच्चद्वारं प्राग्वत्प्रकल्पयेत् चतुर्द्वारमये दुर्गे द्वारदोषो न विद्यते १२६ प्रधानं यन्महाद्वारं त्वाद्यभित्तिषु संस्थितं
रथ्याविद्धं न कर्तव्यं नृपेण भूतिमिच्छता १२७ सरलेन च मार्गेण प्रवेशो यत्र वेश्मनि मार्गवेधं विजानीयान्नानाशोकफलप्रदं १२८
तरुवेधं विजानीयाद्यदि द्वारमुखे स्थितं कुमारमरणं ज्ञेयं नानारोगश्च जायते १२९ अपस्मारभयं विद्याद्द्वाराभ्यन्तरवासिनां द्वारा
ग्रे पंचवेधं तु दुःखशोकामयप्रदं १३० जलस्रावस्तथा द्वारे मूलेनर्थव्ययो भवेत् द्वाराग्रे देवसदनं बालानामार्तिदायकं १३१ देवद्वारं वि
नाशाय पाङ्कुरं द्वारमेव च ब्रह्मणो यत्र संविद्धं तद्भवेत्कुलनाशनं १३२ गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनं अवातकलहं शोकं ना
र्यो वासं प्रदूषयेत् १३३ उत्तरे पंचमं द्वारं ब्रह्मणो विद्धमुच्यते तस्मात्सर्वप्रियाद्देवमध्ये चैव विशेषतः १३४ द्वारं न कारयेद्धीमान्प्रासादे तु

विपर्ययः देवतासन्निधाने तु प्रसानाभिमुखे तथा ९३५ स्त्रीनाशः स्तंभवेधे स्यात्तापशोचनथैव च देवतासन्निधानस्थे गृहे गृहपतेः क्षय
९३६ प्रसानाभिमुखे गेहे राक्षसाद्भयमादिशेत् चतुःषष्ठिपदं कृत्वा मध्ये द्वारं प्रकल्पयेत् ९३७ विस्ताराद्द्विगुणोच्छ्रायस्तत्त्रिभागः
कटिर्भवेत् विस्तारार्द्धं भवेद्गर्भो भित्तयोन्यः समन्ततः ९३८ गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितं उच्छ्रायात्पाददविस्तीर्णा शाखा स्यात्
दुदुंबरः ९३९ विस्तारपादप्रमितं बाहुल्यं शाखयोः स्मृतं त्रिपंचसप्तनवभिः शाखाभिर्द्वारमिष्यते ९४० कनिष्ठं मध्यमं ज्येष्ठं यथाये
म प्रकल्पयेत् विस्ताराद्द्विगुणोच्छ्रायः चत्वारिंशाद्विहस्तकं ९४१ धन्यमुत्तममायुष्यं धनधान्यकमेव च शतं वाशीतिसहितं वान निर्गम
नंभवेत् ९४२ अधिकं दशभिस्तद्वत्तथा षोडशभिः शतं शतमानन्त्यतीयत्नु भवत्यशीतिभिस्तथा ९४३ दशद्वाराणि चैतानि क्रमेणो
क्तानि सर्वदा अन्यानि वर्जनीयानि मनसोद्वेगदानि तु ९४४ द्वारवेधं तु यत्नेन सर्वथा परिवर्जयेत् गृहोच्छ्रायाद्द्विगुणितं त्यक्त्वा भू
मिं वहिः स्थितः ९४५ न दोषाय भवेद्वेधो गृहस्य गृहिणस्तथा गृहार्द्धं गृहिणी ज्ञेया गृहान्पूर्वोन रेखुभाः ९४६ पक्षिणी वा तथैव स्यादन्य
गेहान्तसिद्धिदाः पृष्ठद्वारं न कर्तव्यं मुखद्वारावरोधनं ९४७ पिहिते तु मुखद्वारे कुलनाशो भवेद्ध्रुवं पृष्ठद्वारे सर्वनाशो न्मादः स्वयमुद्घाटि
तथा ९४८ मानोनेव्यसनं कुर्यादधिके न्पोर्भयं अर्द्धखंडं यदि द्वारं दलावेधं विनिर्दिशेत् ९४९ कपाटछिद्रं वेधं च कपाटं वैकुयो भवेत् य
त्र विद्धं यदा द्वारं प्रासादे चैव नश्यति ९५० स्तंभं वा खनेयस्य तस्य वंशक्षयो भवेत् त्रिकोणं शकटाकारं सूर्यव्यजनसन्निभं ९५१ मुरजं च
तुलं द्वारमानहीनं च वर्जयेत् त्रिकोणे पीड्यते नारी शकटे स्वामिनो भयं ९५२ सूर्ये धनविनाशः स्याद्व्यजने कलहं स्मृतं धननाशस्तु

वि०
प्र०
२९

मुरजेवर्तुलेकन्यकोद्भवः ९५३ मध्यहीनेतुयद्द्वारंनानाशोकफलप्रदं स्तंभाग्रेविन्यसेत्काष्ठंपाषाणंनैवधारयेत् ९५४ नृपालयेदेवगेहे
पाषाणानाञ्चकारयेत् द्वारशाखाञ्चपाणांतुगृहेपाषाणनिर्मितां ९५५ कर्तव्यानेतरेषाञ्चकारयेन्मतिमान्नरः गृहमध्येकृतंस्तंभंब्र
ह्मणोवेधमुच्यते ९५६ भित्तिश्चैवनकर्तव्यानवह्नस्थानमुच्यते तत्स्थानंयत्नतोरक्षेद्गृहीकीलादिकात्तथा ९५७ भांडेनाशुचिनातद्व
च्छल्येनभस्मनातथा रोगानानाविधाश्चैकाजायन्तेतत्रनित्यशः ९५८ द्वारस्योपरियद्द्वारंतद्द्वारंशकटंस्मृतं चतुष्पथ्यकुलोत्से
धंचतुर्लिंगञ्चविस्तरं द्वारस्योपरियत्नेनविचार्यपशाकटंचयत् अग्ध्मान्तेशुद्रजंप्रोक्तंकुलेकुलविनाशनं ९५९ पीडाकरमीडितन्तुस्त्रभ
दंमध्यपीडितं वास्तोन्तेप्रवासःस्याद्दिग्भ्रान्तेदस्युतोभयं दौर्भाग्यंनिधनंरोगादारिद्र्यंकलहन्तथा विरोधश्चार्थनाशश्चसर्ववेधे
क्रमाद्भवेत् ९६० पूर्वेणफलिनोवृक्षाःक्षीरवृक्षाश्चदक्षिणे पश्चिमेनजलंश्रेष्ठंपद्मोत्पलविभूषितं ९६१ सर्वतश्चापिकर्तव्यंपरिखा
वलयादिकं याम्यन्तपोवनस्थानमुत्तरेमातृकागृहं ९६२ वारुणेश्रीनिवासस्तुवायव्येगृहमालिका उत्तरेयज्ञशालातुनिर्माल्यस्था
नमुच्यते ९६३ वारुणेसोमदैवत्येवलिन्निर्वपनंस्मृतं पुरतोवृषभस्थानंशेषंस्यात्कुसुमायुधं ९६४ जलवापीतथैशान्येविष्णुर्च्चज
लशायिनं एवमायतनंकृत्वायोच्चुभमण्डपसंयुतं ९६५ घण्टाविनानसकतोरणचित्रयुक्तन्नित्योत्सवप्रमुदितेनजनेनसार्द्धं यःकारयेत्सु
रगृहंभवनंध्वजाढ्यं श्रीस्तन्नमुञ्चतिसदादिविपूज्यतेच ९६६ एवन्द्वारार्चनविधिंकृत्वाद्वारवलिन्ततः महाध्वजन्द्वारमुखेप्रवेश
समयेकृतं ९६७ पुत्रदारधनादीनामृद्धिदंसर्वकर्मणि इतिद्वारविधिःप्रोक्तामयात्रेसमुखोदितः ९६८ यःकरोतिविधानेनसतुसुखी

